हरिदास संस्कृत ग्रन्थमाला ३४१

# सर्वलक्षणसंग्रह

## अकाराधनुक्रमेण
## सर्वतन्त्रसिद्धान्त ३४७७
## पदार्थलक्षणकोशः

रचयिता

**स्वामी गौरीशङ्कर भिक्षु**



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

हरिदास संस्कृत ग्रन्थमाला - ३४१

॥ श्रीः ॥

# सर्वलक्षणसंग्रहः

अकाराद्यनुक्रमेण
सर्वतन्त्रसिद्धान्त ३४७७
पदार्थलक्षणकोशः

रचयिता
स्वामी गौरीशङ्कर भिक्षु



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

**प्रकाशक** : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी
**मुद्रक** : चौखम्बा प्रेस, वाराणसी
**संस्करण** : पुनर्मुद्रित, वि० सम्वत् २०६७, सन् २०१०
**मूल्य** : रू० ४०.००



के. ३७/९९, गोपाल मन्दिर लेन
गोलघर (मैदागिन) के पास, पोस्ट बॉक्स नं० १००८,
वाराणसी-२२१ ००१ (भारत)
फोन : २३३३४५८ (आफिस),
२३३४०३२, २३३५०२० (आवास)
e-mail : cssoffice@satyam.net.in

*अपरं च प्राप्तिस्थानम्*

**चौखम्बा कृष्णदास अकादमी**
पुस्तक-प्रकाशक एवं वितरक
पोस्ट बॉक्स नं० १११८, के. ३७/११८,
गोपाल मन्दिर लेन वाराणसी-२२१ ००१ (भारत)
फोन : २३३५०२०

HARIDAS SANSKRIT SERIES - 341

# SARVALAKṢAṆA SAṂGRAHA

## PADĀRTHALAKṢAṆAKOŚA

by

Swami Gaurishankar Bhiksu



CHOWKHAMBA SANSKRIT SERIES OFFICE

Varanasi

# ● भूमिका ●

श्रीमतः सूत्रकारान्भाष्यकाराँस्तथा तदनुसारिणः पूर्वाचार्यांश्च भूयो-भूयो नमस्कृत्य द्वित्राः शब्दाः प्रदर्श्यन्ते, ये जना नानाशास्त्रनिरीक्षणे श्रमभियस्तदर्थोऽयं मे सङ्ग्रहः। तथा चायं ग्रन्थः शतसहस्रधा भूत्वा देशदेशान्तरवर्त्त्यनेकविद्वद्वृन्ददृष्टिगोचरो भवेदेवञ्च विद्यार्थिगणानां स्वल्पव्ययेन मित्रम्भवेदिति ज्ञात्वा श्रीमत्या मनोभरिदेव्या मुद्रापयित्वा प्रकटीकृतः।

अत्र कदाचिद्दृष्टिदोषेण सीसकाक्षरभङ्गाद्वा यदि कुत्रचित्स्थलेऽशुद्धिः स्यात्तर्हि सदयीभूय सुजनैः क्षन्तव्या इति।

## सङ्केतः

एतत्पुस्तकस्य प्रत्येकपृष्ठमध्ये निखिलतान्त्रिकलक्षणानि संस्थितानि, तेषाञ्च झटिति प्राप्तयेऽकारादिक्रमेण सूचीकृता। तस्यान्तिमलक्षणस्याद्यं वर्णद्वयं पृष्ठोपरि विन्यस्तं वर्तते, तद्दृष्टिमात्रेण यदक्षरपर्यन्तं लक्षणं तत्पृष्ठारूढीभूतं तद्बोधो भविष्यति। तेनेष्टलक्षणानामनायासेन लाभो भविष्यतीति।

| | |
|---|---|
| ग्रं० ग्रन्थान्तरे<br>नै० नैयायिकाः<br>मी० मीमांसकाः<br>वे० वेदान्तिनः<br>वै० वैयाकरणाः<br>अ० अपठनीयम् | इत्यक्षरस्य ग्रहणं कृतम्। तत्तद्ग्रन्थनामानि विस्तरभिया नोक्तानि, विशेषलक्षणसमापनात्परं विशेषलक्षणारम्भात्पूर्वञ्च तज्ज्ञापकमीदृशं ❀ पुष्पाकारचिह्नं दत्तम्। तत्रोक्तप्रसिद्धलक्षणमेकत्वेन गणयित्वा द्व्यादिसङ्ख्याङ्काः स्थापिता इति। |

—*—

# अनपेक्षितापेक्षितग्रन्थः

| पृष्ठे | पङ्क्तौ | अन० | अपे० | | | | |
|---|---|---|---|---|---|---|---|
| ९ | १७ | पोपाधि | पाधी | १०५ | ७ | ख ग | खप्राग |
| | | | | १११ | १८ | लक्षि | लक्ष्यि |

६९ १२ त्वम् ॐ२ त्रैकालिकनिषेधाप्रतियोगित्वम् ३ सर्वकालवृत्तित्वमिति प्र० ४ ध्वंसाप्रतियोगिवृत्तित्वविशिष्टसत्तायोगित्वं

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ९८ | ४ | देशा | वेशा | १४० | १६ | जानमी | जानामी |
| १०३ | ८ | नादीभिः | नादिभिः | १४६ | १३ | गीत | प्रगीत |

१२६ १८ वि नानार्थेऽव सन्देहे हरणं हार उच्यते, नानासन्देहहरणाद्व्यहार इति स्मृतः ४

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १३३ | ८ | मूमि | भूमि | १४८ | १७ | ह्यम् ३ | ह्यम् ३) |
| १३४ | १७ | श्लाघाः- | श्लाघा- | १५१ | १८ | द्रूपण | द्रूपेण |

**प्रतियोगी**-यस्याभावः सः १ प्रति पूर्वं योगस्संबन्धो यस्य सः २ विरोधित्वं प्रतियोगित्वम् ३ धर्मिभिन्नत्वे सति भेदनिरूपकत्वम्

**मदः**-मत्तुल्यः कोऽस्तीति गर्वविशेषः १ मत्सदृशः कोस्तीति ह०

**महावाक्यं**-महद्वाक्यम् १ परस्परसंबद्धार्थकवाक्यम् २ वाक्यसमुदायरूपत्वे सत्येकवाक्यमिति मी० ३ जीवब्रह्मैक्यबोधकवाक्यं

**मूढः**-इदमर्थसाधनमिदमनर्थसाधनमिति विवेकशून्यः २३३७

**मूर्खः**-शास्त्रज्ञानशून्यः ४ वेदशास्त्राधीतत्वे सति संसारासक्तः २३४४

**यौगिकरूढिः**-अवयवशक्तिसमानाधिकरणसमुदायशक्तिरूपा रूढिः

**रतिः**-यूनोरन्योन्यविषयस्थायिनीच्छा ॥ २४७० ॥

**लज्जा**-मुखसंवरणादिकार्यजनको मनोविकारविशेषः ॥२५२५॥

**लिङर्थत्वं**-कार्यबुद्धिगोचरत्वे सति भावार्थसाध्यफलजनकत्वम् १ प्रवृत्तिजनकज्ञानविषयत्वम् ॥ २५४३ ॥

**लीला**-स्त्रीणां क्रीडारूपो व्यापारः ❀ २ शृङ्गारभावचेष्टा २५४७

**लोभः**-परद्रव्याभिलाषः १ परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते, अभिलाषो द्विजश्रेष्ठ स लोभः परिकीर्तितः ॥ २५५५ ॥

**वाक्यैकवाक्यता**-अङ्गबोधकवाक्यस्याङ्गिबोधकवाक्येन सहैकवाक्यता १ प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वम् । [स्मृतिजनकः

**विजयः**–पराहङ्कारखण्डनम् ॥ २६५१ ॥

**विपर्ययः**–अतस्मिँस्तत्प्र (त्ययः २) कारकनिर्णयः ॥२६८२॥

**विराट्**–पञ्चीकृतपञ्चमहाभूतकार्यसमष्टिस्थूलशरीरः १

**विवादः**–विरुद्धो वादः १ पक्षप्रतिपक्षपरिग्रहेण वदनम् २७२१

**विवाहः**–विशिष्टं वहनम् १ भार्यात्वसम्पादककर्म २

**विशेषत्वं**–अन्त्यव्यावर्तकत्वे सति नित्यद्रव्यमात्रवृत्तित्वम् ।

**व्यापारत्वं**-तज्जन्यत्वे सति त(त्सहायत्वम् १)ज्जन्यजनकत्वम्,

**व्रतम्**–क्रियाविषयको नियमः २

**शक्तः**-कार्योत्पादनयोग्यः १ शक्त्याश्रयः २ 'वाचक' लक्षणमप्यत्र ०

**सर्वनामत्वं**–स्वोच्चारणानुकूलबुद्धिप्रकारविशिष्टार्थबोधकत्वे सति सर्वादिगणपठितत्वम् ॥ ३२०६ ॥

**सम्यग्ज्ञातत्वं**–प्रकृतिप्रत्ययविभागादिपूर्वकज्ञानविषयताशालित्वम् । [विधिकपतनजन्यस्तापः

**सहसापतनतापः**–पुण्यकर्मक्षये स्वर्गादिलोकराज्यादिपरा-

**सामर्थ्यं**–पृथगर्थानां पदानां विशिष्टार्थोपस्थितिजनकत्वम् ।

**स्फुटत्वं**–असन्दिग्धाविपर्यस्तप्रतिपत्तिविषयत्वम् ॥ ३३७८॥

# सम्मतयः

काशीस्थप्रधानप्रधानैकोनपञ्चाशत् (४९) पण्डितानामभिप्रायाः—

**ये सन्ति विषयाश्चास्मिंस्ते न दृष्टाः परत्र वै,**
**अत्रैव च समाविष्टं सर्वसिद्धान्तलक्षणम् ।**

**जगन्नाथपुरीस्थसंस्कृतकालेजाद्रामचन्द्रमिश्रः** सूचयति—ग्रन्थेऽस्मिन्नधीते सर्वविषयाणां परिभाषा ज्ञायेत, बहुग्रन्थावलोकनेन यादृशं ज्ञानं सम्पद्येत तादृशञ्च खल्वेकमिदमवलोक्यापि सञ्जायेत, अतोऽयं ग्रन्थः सर्वथा व्युत्पित्सूनामन्तेवासिनामुपयोगी भवेदिति ।

**मैसूरस्थराजकीयपाठशालायाः** केशवशास्त्रिणोऽपि बोधयन्ति—तत्तद्ग्रन्थव्याख्यातृभिर्निरुक्तानि लक्षणानि तत्तत्प्रकरणानुरोधेनैव न तत्त्वतः, तत्त्वतः निरुक्तान्यपि नैकत्र सर्वाणि ।

**काञ्चीतः**-मञ्जुभाषिणी ज्ञापयति—अयं ग्रन्थः कोशरूपस्सैद्धान्तिकानां पदानां भिक्षुकेण सङ्गृहीतः, अत्र चाकारादिक्रमेण तान्त्रिकाणां बहूनां शब्दानां सङ्ग्रहस्तेषां व्याख्या च कृता वर्तते ।

**बडोदा-नारायणशालायाः** अमृतलालः सङ्केतयति—गूढार्थकशब्दानां प्रवृत्तिनिमित्तार्थाः पदार्थस्वरूपनिर्धारणोपयोगीनि इतरव्यावृत्तिबोधजनकानि च लक्षणान्यत्र सम्यगुपनिबद्धानि ।

OXFORD University Library-एवमन्यान्यनगरवासिभिर्बहुभिः सुधीभिरस्य सङ्ग्रहस्य प्रामाणिकत्वमङ्गीकृतम् । तथाहि—

**सर्वलक्षणसङ्ग्रहः**—सङ्ग्राहको भिक्षुगौरीशङ्करः । ग्रन्थेऽस्मिन्वेदवेदाङ्गदर्शनस्मृतिपुराणकाव्यसाम्प्रदायिकविविधशास्त्रप्रतिपादितपदार्थानां षट्सप्तत्युत्तरचतुःशताधिकत्रिसहस्र ३४७६ लक्षणानि सन्ति, एवंविधः सर्वविषयोपकारकः सुखप्रवेशसाधनभूतश्च लाक्षणिकनिबन्धोऽद्यावधि केनापि न विहितः ।

**सङ्केतस्त्वित्थम्—मनोभरीदेवी,** पुठी-ग्रामः,
पत्रालय बवानीखेडः, प्रदेशो हिसारः (पञ्जाब)



# सर्वतन्त्रसिद्धान्तपदार्थलक्षणसङ्ग्रहः ।

श्रीगणेशाय 'नमः, परमर्षिभ्यः' ।

त्वां विना निःस्वरूपोऽहं मां विना त्वं कथं स्थितः ! ।
दिष्ट्येदानीं मया लब्धो योऽसि सोसि नमोऽस्तुते १
श्रीचेतनकिङ्कराह्वश्रीमद्रामपुर्याह्वयोः ।
वन्दे पादौ तथा श्रीमद्धीरालालाह्वधीमताम् ॥ २ ॥
श्रद्धाधनेन ग्रथितं गौरीशङ्करभिक्षुणा ।
बोधाय वादिबाधाय विदुषां कण्ठभूषणम् ॥ ३ ॥
क ! ग्रन्थकरणं क ! त्वमिति मा वित्त पण्डिताः ।
सत्सङ्गानुग्रहः किं ? किं ? न करोत्येवमाह वाक् ४
प्रज्ञाशब्दमयस्यास्य देहस्य मम दुर्जनाः ।
दयध्वं प्रहरध्वं तु चेदिदं पाञ्चभौतिके ॥ ५ ॥
प्रमाणसिद्धान्तविरुद्धमत्र यत्किञ्चनाभून्मतिमान्द्यदोषात् ।
मात्सर्यमुत्सार्य महानुभावाः प्रसादमाधाय विशोधयन्तु ६
विद्वांसो यदि मम दोषमुद्गिरेयुः यद्वा ते गुणगणमेव कीर्त्तयेयुः ।
तुल्यं तद्वहु मनुते मनो मदीयं कष्टं तद्धन्मनुते यदाह मन्दः ॥७॥

---

१ मन्त्रगुरुज्ञानप्रदगुरुविद्यागुरून्क्रमशो नमस्यति श्रीचेतनेत्यादिना ।

दोषत्वमुज्ज्वलगुणा अपि यान्ति येषु
तैरुन्नतेः किमथवेह तिरस्कृतेः किम् ।
दोषोऽपि येषु गुणतामुपयाति भूयाँ-
स्तेभ्यो नमोऽस्तु सततं भुवि सज्जनेभ्यः ॥ ८ ॥

ननु किमर्थं लक्षणसङ्ग्रहारम्भो लक्षणानामनुपयोगादिति चेदुच्यते, अस्ति हि महानुपयोगः तथाहि—यथा विवाहे सलक्षणो वरो लक्षणवतीं कन्यामुपयच्छेतेति ।

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्,
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।

इत्यादिवचनैः स्त्रीपुंससामुद्रिकलक्षणानां विवाह उपयोगात् ।

लिङ्गं सलक्षणं पूज्यं त्यजेल्लिङ्गमलक्षणम्,
तस्मात्सर्वप्रयत्नेन लिङ्गं कुर्यात्सलक्षणम् ।

इत्यादिवचनैर्लिङ्गलक्षणानां तत्पूजादावुपयोगात्, एवमन्येषामपि लक्षणानां यथासंभवमुपयोगाद्युक्त एव लक्षणसङ्ग्रहारम्भ इति । लक्षणानामुपयोगः पूर्वाचार्यैरपि दर्शितः, तथाहि—

ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः,
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः ।

किञ्च, लक्षणप्रमाणाभ्यां वस्तुसिद्धिर्न तु प्रतिज्ञामात्रेणेति न्यायादपि पदार्थलक्षणमवश्यमपेक्षणीयम् !, तत्र प्रमाणं विहाय लक्षणानि निरूपयाम इति ।



**अकस्मात्त्वं**-कारणानधीनत्वम् १ अनिश्चितकारणकत्वं वा॥ २॥

**अक्रूरत्वं**-मृदुत्वम् १ द्रोहशून्यत्वं वा २ वृथापूर्वपक्षादिकारिष्वपि शिष्यादिष्वप्रियभाषणादिव्यतिरेकेण बोधयितृत्वम् ॥ ५ ॥

**अक्षरं**—न क्षरति १ वर्णस्मारकत्वे सति लिपिसन्निवेशत्वमक्षरत्वं

**अखण्डार्थत्वं**-सजातीयविजातीयस्वगतभेदशून्यार्थत्वम्। साङ्ख्यात्मन्यतिव्याप्तिवारणाय **सजातीये**ति, आकाशेऽतिव्याप्तिवारणाय **विजातीये**ति १ तत्प्रातिपदिकार्थत्वम् २ अपर्यायानेकशब्दप्रकाश्यत्वे सत्यविशिष्टत्वम्। घटः कलशः कुम्भ इत्यादिपर्यायानेकशब्दप्रकाश्येऽविशिष्टे घटादावतिप्रसङ्गव्युदासाय **सत्यन्तम्**, **नीलो घट** इत्याद्यपर्यायानेकशब्दप्रकाश्ये तादात्म्येन नीलविशिष्टे घटाद्यर्थेतिप्रसङ्गवारणार्थम**विशिष्टे**ति

**अखण्डार्थबोधकवाक्यत्वं**-संसर्गानवगाहियथार्थज्ञानजनकत्वम्। **राजपुरुष** इत्यादौ संसर्गपरे वाक्येऽतिव्याप्तिवारणाय **संसर्गानवगाही**ति १ प्रातिपतिकार्थमात्रपर्यवसायित्वं

**अखण्डोपाधिः**-अनिर्वचनीयो धर्मः १ असमवेतत्वे सत्यनुगतत्वं

**अख्यातिः**—न ख्यातिः १ विशिष्टार्थगोचरविसंवादिप्रवृत्तिजनकप्रकाशः २ स्वरूपतो विषयतश्चागृहीत (भेदज्ञानद्वयम्) विवेकानेकज्ञानत्वम्। एकविषयानेकज्ञानेष्वतिव्याप्तिपरिहारार्थं स्व-

---

१ **तत्प्रातिपदिकार्थत्वं**-प्रकृष्टप्रकाशश्चन्द्र इति वत्तदेकमात्रवस्तुपरत्वम्
२ अपर्यायभूतायेअनेकेशब्दाःसत्यज्ञानानंदादयस्तत्प्रकाश्यत्वेसतीत्यर्थः

रूपपदम्, समूहालम्बनज्ञानेऽतिव्याप्तिपरिहारार्थं त्रिपयत इति विशेषणम् ३ ख्यातेरेव (भेदग्रहस्यैव) अभावः ॥१९॥

**अग्निहोत्रम्**-आहितेष्वग्निषु सायं प्रातश्चानुष्ठेयो होमः ॥ २० ॥

**अघटकत्वम्**-तद्विषयत्वाव्यापकविषयतावत्त्वम् ॥ २१ ॥

**अङ्गत्वम्**-अन्यार्थत्वम् १ तदीयप्रधानफलजनकव्यापारजनकत्वे सति तदीयप्रधानफलाजनकत्वम्। घटादावतिव्याप्तिवारणाय **सत्यन्तम्** २ उपकारकत्वम् ३ वेदार्थज्ञानोपयोगित्वम्।

**अजहल्लक्षणा**-शक्यार्थापरित्यागेन तत्सम्बन्ध्यर्थान्तरे वृत्तिः, यथा शोणो धावतीत्यत्र शोणपदस्य शोणगुणविशिष्टेऽश्वादिद्रव्ये। जहल्लक्षणायामतिव्याप्तिवारणाय **शक्यार्थापरित्यागेनेति** १ लक्ष्यतावच्छेदकरूपेण लक्ष्यशक्योभयबोधप्रयोजिका लक्षणा।

**अज्ञः**-ज्ञानरहितः १ आत्मज्ञानशून्यः * २ गुरुमुखानधीतशास्त्रः ३ श्रुतितात्पर्यानभिज्ञो वा ॥ ३१ ॥

**अज्ञातं**-न ज्ञानम् १ ज्ञानाभास्यम्। [क्षणमप्यत्रप०

**अज्ञातसत्ता**-ज्ञानप्राक्कालीनविषयसत्ता १ 'व्यावहारिकसत्ता'ल-

**अज्ञानं**-न ज्ञानम् १ कर्तव्याकर्तव्यादिविषयविवेकाभावः * २ परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्याबोधः * ३ कार्यमात्रोपादानत्वे सति सदसद्भ्यामनिर्वचनीयम्[1] ४ अनादि-

---

१ सदसद्भ्यामित्युपलक्षणं, सत्त्वेनासत्त्वेन सदसदुभयत्वेन ब्रह्मणो भिन्नत्वेनाभिन्नत्वेन भिन्नाभिन्नोभयत्वेन सावयवत्वेन निरवयवत्वेन सावयवनिरवयवोभयत्वेन चेति नवधाऽप्यनिर्वाच्यमित्यर्थः।

भावरूपत्वे सति विज्ञाननिरास्यम् । उत्तरज्ञाननिवर्त्यपूर्वज्ञान-वारणायानादिरूपेति, प्रागभाववारणाय, ज्ञानाभावोऽज्ञान-मित्याशङ्कानिरासार्थं वा **भावरूपे**ति, आत्मन्यतिव्याप्तिवा-रणाय **ज्ञाननिरास्य**मिति ५ मिथ्यात्वे सति साक्षाज्ज्ञान-निवर्त्यम् । ज्ञानेनेच्छाप्रागभावः साक्षान्निवर्त्यत इति वदन्तं प्रति **सत्यन्तम्**, अज्ञाननिवृत्तिद्वारा ज्ञाननिवर्त्यबन्धेऽतिव्याप्ति-निरासाय **साक्षा**दिति ६ अनाद्युपादानत्वे सति मिथ्यात्वम् । ब्रह्मनिरासार्थं **मिथ्यात्व**मिति, मृदादिनिरासार्थम**नादी**ति, अविद्यात्मनोः संबन्धनिरासार्थ**मुपादानत्वे सती**ति ॥४२॥

**अणुत्वं**-अतिक्षुद्रपरिमाणवत्त्वम् १ सूक्ष्मपदार्थत्वे सत्यारम्भकत्वं

**अतिक्रमणं**-मर्यादोल्लङ्घनम् १ उचितादधिकस्यानुष्ठानं वा ४६

**अतिथिः**-अज्ञातपूर्वगृहागतव्यक्तिः १ अज्ञाता तिथिरागमनस्यास्य

**अतिदेशः**-एकत्र श्रुतस्यान्यत्र सम्बन्धः १ अन्यधर्मस्यान्य-त्रारोपणं वा २ स्वविषयमुल्लङ्घ्यान्यविषये उपदेशः ॥५१॥

**अतिप्रसङ्गः**-प्रकृतादन्यत्र प्रसञ्जनम् १ प्रस्तुतविषयादन्यत्र प्रसक्तिर्वा २ यस्य बोधो यत्राभिमतस्तदन्यस्यापि बोधप्रसङ्गः ।

**अतिवादः**-निरर्थकोऽतिप्रलापः १ अत्युक्तिसंस्थापकः शब्दः

**अतिव्याप्तिः**-अल (क्ष्यावृत्तित्वम् १) क्ष्ये लक्षणगमनम् २ लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्, यथा गोः शृङ्गित्वं लक्षणं लक्ष्यगोवृत्तित्वे सत्यलक्ष्यमहिष्यादिवृत्ति ॥ ६० ॥

**अतिशयतापः**-स्वाधिकतरदेवतोत्कर्षदर्शने जायमानस्तापः।

**अतिशयोक्तिः**-अतिशयनोक्तिः १ पौर्वापर्यविपर्ययत्वम्॥६३॥

**अतिन्द्रियं**-इन्द्रियाग्राह्यम् १ लौकिकसाक्षात्कारविषयगुणत्वन्यूनवृत्तिसंस्कारत्वान्यधर्मसमवाय्यन्यगुण अतीन्द्रियगुणः ॥६५॥

**अत्यन्तनिवृत्तिः**-कारणसहितकार्यनिवृत्तिः * १ स्वप्रतियोगिजातीयप्रागभावासमानाधिकरणनिवृत्तिः ॥ ६७ ॥

**अत्यन्ताभावः**-नित्यसंसर्गाभावः १ त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽभावः, यथा भूतले घटो नास्ति । ध्वंसप्रागभाववारणाय **त्रैकालिके**ति, भेदवारणाय **संसर्गे**त्यादि ६९

**अत्युक्तिः**-अनौचित्येनोक्तिः १ न्यायविरुद्धवाक्यम् ॥ ७१ ॥

**अथर्वत्वं**-ब्रह्मकर्मोपयोगिमन्त्रसमूहत्वम् ॥ ७२ ॥

**अदृष्टं**-कर्मजन्य(त्वे सत्यतीन्द्रियम् १)संस्कारः २ न दृष्टम् ७५

**अद्भुतः**-विस्मयः १ चकिताद्यनुभावत्वे सति हर्षादिसञ्चारी * २ सिद्धस्य धर्मिणो धर्म्यन्तरावयवैर्योगः ।

**अद्वैतं**-न द्वैतम् १ सजातीयविजातीयस्वगतभेदशून्यम् ॥८०॥

**अधमत्वं**-निन्दायोग्यत्वम् * १ भयदयालज्जाशून्यत्वम् २ कामक्रीडाविषये कर्त्तव्याकर्तव्याविचारकत्वमिति **रसमञ्जर्याम्**८३

**अधर्मत्वं**-निषिद्धकर्मजन्य( त्वम् १ )नरकजनकवृत्तिगुणत्वव्याप्यजातिमत्त्वम् * २ वेदबोधितानिष्टसाधनताकत्वम् । विषभक्षणादिवारणाय **वेदे**ति, ब्रह्मयागादिवारणाया**निष्टे**ति॥८६॥

**अधिकं**-अधिकहेत्वादिकथनम् १ योग्यपरिमाणातिक्रमित्वम् ८८

**अधिकरणं**—साक्षात्परम्परया वा क्रियाश्रयः १ कर्तृकर्मद्वारकफलव्यापाराधारः, यथा स्थाल्यामोदनं गृहे पचतीति २ वेदविचारात्मको न्यायः ३ विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्, निर्णय (सङ्गति) श्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥९२॥

**अधिकारः**—अधिकं कार्यम् १ उत्तरोत्तर (साकाङ्क्षत्वम् २) संबन्धः ३ फलभोक्तृत्वे सति कर्मकर्तृत्वम् ४ यथेष्टं क्रयविक्रयादिकर्तृत्वसंपादकस्वामित्वम् ॐ ५ स्वदेशे लक्ष्यसंस्कारोपयोगिवाक्यार्थबोधाजनकत्वे सति परदेशे तादृशवाक्यार्थबोधजनक इति वै० ६ अनेकदेहारम्भकबलवत्प्रारब्धकर्मफलत्वम् ॥ ९९ ॥

**अधिकारविधिः**—कर्मणः फलसंबन्धबोधको विधिः ॥१००॥

**अधिकारी**-तत्तत्कर्म(करणयोग्यः १)जन्यफलार्थी २ ग्रन्थप्रतिपाद्यार्थविषयकज्ञानधारणशक्तः ३ मुख्यगौणोभयप्रयोजनप्राप्तिकामः * ४ मलविक्षेपरहितत्वे सति साधनचतुष्टयसंपन्नत्वे सति स्वस्वरूपाज्ञानवत्त्वम् । [न्तृत्वं

**अधिष्ठातृत्वं**-सन्निधानमात्रेण तत्तत्पदार्थानां तत्तत्कर्मसु नियअधिष्ठानं—आश्रयः * १ अध्यस्ताधिकरणम् २ यदाधारमारोप्यं भासते तत् ३ सत्तास्फूर्तिप्रदातृचैतन्यम् ४ सविलासाज्ञानविषय इति ग्रं० ५ स्वबुद्धिबाध्यकार्याधारः ६ 'आधार' लक्षणमप्यत्रप०

**अध्ययनं**-अक्षरमात्रपाठ इति वैदिका १ सार्थाक्षरग्रहणमिति

मी० २ गुरुमुख (तः शास्त्रार्थज्ञानम् ३) ोच्चारणानुसार्युच्चारणम्
**अध्यस्तत्वं**-संप्रयोगसंस्कारजन्यत्वे सति प्रत्यभिज्ञाभिन्नत्वम्।
**अध्यात्मशास्त्रं**-आत्मानमधिकृत्य प्रवृत्तं शास्त्रम् ॥ ११८॥
**अध्यात्मं**-आत्म (संबन्धित्वमध्यात्मत्वम् १) ानं देहेन्द्रियादिकं क्षेत्रज्ञं ब्रह्म वाधिकृत्य वर्तमानम्। [तादेः
**अध्यारोपः**-वस्तुन्यवस्त्वारोपः, यथा शुक्तिकाशकलादौ रज-
**अध्यासः**-परत्र परावभासः १ अधिष्ठानविषमसत्ताकावभास इति परिमले २ एकावच्छेदेन स्वसंसृज्यमाने स्वात्यन्ताभाववत्यवभासः। स्वात्यन्ताभाववत्यवभास एतावन्मात्रोक्तौ यत्र भूतलादौ घटोऽपसारितः पुनश्चानीतस्तादृशघटादावतिप्रसङ्गः स्यादिति **स्वसंसृज्यमान** इत्युक्तम्, एवमपि मूलावच्छेदेन कपिसंयोगात्यन्ताभाववति वृक्षे शाखाग्रावच्छेदेन च तत्संसृज्यमानेऽवभासमानत्वात्संयोगस्य तत्रातिप्रसङ्गः स्यादित्यत **एकावच्छेदेने**ति ३ दोषजन्यत्वे (सति संस्कारजन्यः ४) सत्यधिष्ठानसामान्यज्ञानजन्यः ५ पारमार्थिकत्वावच्छिन्नस्वात्यन्ताभावाधिकरणे प्रतीयमान इति तत्त्वविवेके ६ स द्विविधो ज्ञानाध्यासोऽर्थाध्यासश्च। यद्वा, स्वरूपाध्यासः संसर्गाध्यासश्चेति द्विविधोऽध्यासः। तत्राद्यो रज्ज्वादौ भुजङ्गाद्यध्यास आत्मनि

---

१ अवभासते इत्यवभास इति व्युत्पत्त्याऽवभासशब्दोऽर्थाध्यासपरः, अवभासतेऽर्थः (=रजतादिः) अनेनेति व्युत्पत्त्या च ज्ञानाध्यासपरः।

वाऽनात्माध्यासो द्वितीयस्तु स्फटिके लौहित्यस्य शङ्खे पीतिम्नोऽनात्मनि चात्मतद्धर्मादेः, आत्मादेः पारमार्थिकत्वेन स्वरूपतोऽध्यासाभावात्। **अथवा**, प्रकारान्तरेण सोपाधिकोनिरुपाधिकश्चेति भेदादध्यासो द्विविधः। द्विविधोऽप्यसौ बाह्याभ्यन्तरभेदात्पुनर्द्विविधः। तत्र लोहितस्फटिकादिर्बाह्यः सोपाधिको भ्रमः, जपाकुसुमादेरुपाधित्वात्। कर्तृत्वादिर्भ्रम आन्तरः, कर्मरूपेण परिणताऽविद्यारूपोपाधिकार्यत्वात्। शुक्तिरूप्यादिस्तु बाह्यो निरुपाधिको भ्रमः। आकाशादिभ्रमोऽपि बाह्यो निरुपाधिकः। अहमज्ञो ब्रह्म न जानामीत्याद्याभ्यन्तरो निरुपाधिको भ्रमः। इत्यादीनि बोद्धव्यानि, विस्तरस्तु गुरुमुखादेवावगन्तव्यः १२७

**अध्याहारः**-प्रकृतोपयोगिशब्दकल्पनम् १ अस्पष्टार्थवाक्यस्य शब्दान्तरकल्पनाद्वारा स्पष्टकरणम् २ अश्रुतपदानुसंधानम्

**अध्वर्युः**-कर्मारम्भसमाप्तिकर्ता १ अध्वरं यातीति २ युनक्तीति।

**अनवस्था**-अप्रामाणिकानन्तप्रवाहमूलकप्रसङ्गः १ उपपाद्योपपादकप्रवाहोऽनवधिः। चक्रकव्यावृत्त्यर्थम**नवधि**रिति,साकाङ्क्षतापरिहारायो**पपाद्योपपादके**ति २ अव्यवस्थितपरम्परारोपोपाधिनोऽनिष्टप्रसङ्गः ३ पूर्वस्योत्तरोत्तरापेक्षित्वम् ४ सा द्विविधा, अधो धावन्त्यूर्द्ध्वं धावन्ती चेति। तत्राधो धावन्ती यथा घटजनने कपालापेक्षा, कपालजनने कपालिकायास्तज्जनने च तदवयवानामपेक्षा एवं तत्र तत्रेति। ऊर्द्ध्वं धावन्ती

यथा भेदः किं ? भिन्ने धर्मिणि वर्त्ततेऽभिन्ने वा, आद्येपि केन भेदेन भिन्ने कस्य भेदस्यावस्थितिरिति प्रश्ने द्वितीयभेदभिन्ने धर्मिणि प्रथमस्य, तृतीयभेदभिन्ने द्वितीयस्य, चतुर्थभेदभिन्ने तृतीयस्य, एवं तत्र तत्रापीत्यङ्गीकारे ॥ १३७ ॥

**अनागतत्वं**–भविष्यच्छब्दजन्यप्रतीतिविषयत्वम् ॥ १३८ ॥

**अनात्मभूतलक्षणं**-यल्लक्षणं वस्तुस्वरूपाननुप्रविष्टम्, यथा दण्डो दण्डिन इति जैनाः ॥ १३९ ॥

**अनादरः**–आदरशून्यः १ यथाकथञ्चित्प्रवृत्तिरनुत्साह इति प्रं०

**अनादिः**–उत्पत्तिरहितः १ सजातीयप्रयोगपूर्वकः २ नास्त्यादिः प्राथमिको यस्मात्। [यस्य

**अनिकेतः**-नियतनिवासशून्यः १ नास्ति निकेतः नियमेन वासो

**अनिच्छाप्रारब्धं**-अकस्माज्जायमानम्, यथा कण्टकवेधादि १ इच्छां विना जायमानम् ॥ १४८ ॥

**अनित्यत्वं**-त्रैकालिकनिषेधप्रतियोगित्वम् १ ध्वंसप्रतियोगि(त्वे सति प्रागभावप्र० २) वृत्तित्वविशिष्टसत्तायोगित्वम् ॥ १५१ ॥

**अनिर्वचनीयः**–सदसद्विलक्षणः १ निर्वक्तुमयोग्यः ॥१५३॥

**अनिर्वचनीयख्यातिः**–सदसदादिप्रकारैरनिर्वाच्यस्यैवाध्यस्तपदार्थस्य भानम् ॥ १५४ ॥

**अनिष्टप्रसङ्गः**-अनभिमतार्थापादनम्। [नुपूर्वीमान्

**अनुकरणं**-सदृशक्रियादिकरणम् १ अनु(क्रियतेनेन २)कार्यनिष्ठा

**अनुकूलत्वं**-स्वपक्षपातित्वम् १ कार्यसहकारिकारणत्वमिति ग्रं०

**अनुक्रमः**-क्रमानतिक्रमः ॥ १६१ ॥

**अनुगतत्वं**-एकत्वे सत्यनेकवृत्तित्वम् ॥ १६२ ॥

**अनुगमः**-एकस्यानेकत्र संबन्धः १ अनुगतप्रवृत्तिनिमित्तकत्वं

**अनुग्रहः**-अभीष्टसम्पादको व्यापारः १ दुःखिनो दुःखापाकरणे प्रवृत्तिर्वा २ अनिष्टवारणपूर्वकेष्टसाधनेच्छा ॥ १६७ ॥

**अनुज्ञा**-निषेधाभावव्यञ्जिकेच्छा १ कर्तुरिष्टत्वे सति वक्त्रनुमतत्वं

**अनुद्भूतत्वं**-प्रत्यक्षत्वाप्रयोजकत्वम् १ अतीन्द्रियविशेषगुणत्वम्

**अनुपलब्धिप्रमाणं**-योग्यत्वे सत्यनुपलम्भोऽभावप्रमाकरणम्। अयोग्यभूतललग्नसलिलानुपलम्भनिरासाय **योग्ये**ति, योग्यस्योपलम्भनिरासायानु**पलम्भे**ति १ ज्ञानकरणाजन्याभावानुभवासाधारणकारणम्। अदृष्टादौ साधारणकारणेऽतिव्याप्तिवारणाया**साधारणे**ति, ज्ञानकरणाजन्यघटादिभावपदार्थप्रत्यक्षानुभवासाधारणकारणे चक्षुरादावतिव्याप्तिवारणाया**भावे**ति, अभावस्मृतिहेतौ संस्कारेऽतिव्याप्तिवारणाया**नुभवे**ति, अयं विद्याफलकधर्माभाववान्मूर्खत्वादित्याद्यतीन्द्रियाभावानुभवहेतावनुमानादावतिव्याप्तिवारणाया**जन्या**न्तविशेषणम् १७३

**अनुपसंहारित्वं**-अत्यन्ताभावाप्रतियोगित्वविशिष्टसाध्यादिकत्वम् १ किञ्चिद्विशेष्यकनिश्चयाविषयसाधकत्वे सति किञ्चिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वम् ॥ १७५ ॥

**अनुपादेयत्वं**-स्वकृतिसाध्यत्वविरहः ॥ १७६ ॥

**अनुबन्धः**-स्वविषयकज्ञानद्वारा शास्त्रे प्रवर्तकः १ श्रोतृप्रवृत्त्यर्थं ग्रन्थादावनुबध्यमानः २मङ्गलाचरणाव्यवहितोत्तरमेव ग्रन्थादावनुबध्यमान इति पुस्तकान्तरे ३ ग्रन्थप्रवृत्तिप्रयोजकज्ञानविषयः

**अनुभूतः**-अनुभवविषयीभूतपदार्थः। [स्यान्यत्र ज्ञानं

**अनुभूयमानारोपः**-प्रत्यक्षानुभवविषयारोपः १ अन्यत्रानुभूत-

**अनुमतं**-साधुकृतमनेनेत्याद्यनुमोदनरूपमानसपरिणामप्रदर्शनं

**अनुमानं**-अनुमीयतेऽनेनेति १ व्याप्तिपक्षधर्मताविशिष्टलिङ्गज्ञानम् २ अनुमितिकरणम्। कुठारादावतिव्याप्तिवारणायानुमितीति, प्रत्यक्षादावतिव्याप्तिवारणायान्विति ४ स्वजन्यव्यापार (द्वाराऽनुमिते०) वत्तासंबन्धेनानुमितेरसाधारणकारणम्

**अनुमितिः**-व्याप्तिज्ञानकरणकं ज्ञानम् १ परामर्शजन्यं ज्ञानम्। प्रत्यक्षादावतिव्याप्तिवारणाय **परामर्शजन्य**मिति, परामर्शध्वंसवारणाय **ज्ञान**मिति २ लिङ्गज्ञानजन्यं ज्ञानम् ३ व्याप्यज्ञानाद्व्यापकज्ञानं वा ४ साधनधर्मदर्शनात्साध्यधर्मविशिष्टे बुद्धिः।

**अनुयोगी**-यस्मिन्नभावोऽस्ति सः १ अनु पश्चाद् योगः संबन्धो यस्य सः २ विशिष्टप्रतीतिविषयविशेष्यत्वमनुयोगित्वम् ॥१९६॥

**अनुवादः**-भाषान्तरीयवाक्यार्थस्य भाषान्तरीयवाक्येन बोधनम् *१उक्तस्य पुनर्वचनम्, यथा जुहोति जुहोतीत्यादि २

प्रमाणान्त ( रेण निर्णीतार्थज्ञापकः शब्दः ३ ) रावगतार्थ-
बोधकोऽर्थवादः, यथाग्निर्हिमस्य भेषजमित्यादिः ॥ २०२ ॥

**अनुवादकं**-गृहीतग्रा ( हिज्ञानजनकम् १ ) ह्यनुभवमात्रजनकं

**अनुवृत्तिः**-उत्तरत्र संबन्धः १ दवीयस्स्थानान्तरस्थितस्या-
नुसंधानमिति दिनकर्याम् २ पठितस्य पुनः पठनम् ॥२०७॥

**अनुव्यवसायः**-ज्ञानविषयक(ज्ञानम्१)लौकिकमानसप्रत्यक्षविषयः

**अनुषङ्गः**-अविनाभावः *१ एकत्रान्वितपदस्यान्यत्रान्वयः २
वाक्यान्तरे जनितान्वयबोधपदस्य वाक्यान्तरेऽन्वयार्थाभि-
संधानमिति प्रं० ३ अन्योद्देशेन प्रवृत्तस्य तन्नान्तरीयकविधया-

**अनुष्ठानं**-विहितकर्मादिकरणम् ।　　[न्यसिद्धिः

**अनेकं**-न एकम् १ अपेक्षाबोधविषयः २एकत्वभिन्नसङ्ख्याविशिष्टं

**अनैकान्तिकः**-साध्यसंदेहजनकपक्षधर्मताज्ञानविषयः १ विरु-
द्धान्यपक्षवृत्तित्वे सत्यनुमितिविरोधिसंबन्धाव्यावृत्तः २ साधा-
रणासाधारणानुपसंहार्यन्यतमः ॥ २२० ॥

**अन्तः**-समुदायविशिष्टः १पूर्वस्मिन्सति यस्मात्परोनास्ति सोन्त्यः

**अन्तःकरणं**-सर्वज्ञानादिप्रत्यक्षकरणम् १ शरीरान्तःस्थत्वे
सतीन्द्रियसहायकमिति प्रं० २ मिलितसमस्तापञ्चीकृतपञ्चमहा-
भूतसात्त्विकांशकार्यत्वे सति ज्ञानशक्तिप्रधानम् ॥ २२५ ॥

**अन्तःकरणशुद्धिः**-परवञ्चनमायानृतादिपरिवर्जनम् ॥२२६॥

**अन्तरङ्गं**-अन्तर्भूत ( ाङ्गकम्१ ) निमित्तकम् २ अपरनिमित्तकत्वं

**अन्तर्धानं**-स्वविषयकप्रत्यक्षविरोधिव्यापारः, यथोपाध्यायादन्तर्धत्ते छात्रः । [व्यजनकः

**अन्त्यावयवी**-द्रव्यानारम्भकद्रव्यम् १ अवयवजन्यत्वे सत्यवय-

**अन्धः**-नेत्रद्वयशून्यः १ श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्मिते, काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्तितः ।

**अन्धकारः**-अन्धं करोतीति १ प्रौढप्रकाशकतेजोऽभावः २ भयदृष्टितेजोऽवरोधकारक इति ग्रं० ॥ २२८ ॥

**अन्धतामिस्रः**-नरकविशेषः १ अणिमादिगुणसम्पत्तौ दृष्टानुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वमेतन्नश्यतीति यस्त्रासः

**अन्नमयकोशः**-मातृपितृभुक्तान्नजशुक्रशोणितकार्यं स्थूलशरीरं

**अन्यतमः**-तत्तद्वृत्तिशून्यः १ बहूनां मध्ये निर्धारितैकः ⊛ २ अनेकभेदावच्छिन्नप्रतियोगिताकभेदः, यथा घटो घटपटगृहान्यतमो भवति ३ स्वेतरयावत्प्रतियोगिकभेदवत्त्वमन्यतमत्वम् ४ तद्भिन्नत्वे सति तद्भिन्नत्वे सति तद्भिन्नभिन्नत्वम् २३३

**अन्यतरः**-द्वयोर्मध्ये निर्द्धारितैकः १ भेदद्वया (भाववत्त्वम् २) वच्छिन्नप्रतियोगिताकभेदः, यथा घटो घटपटान्यतरो भवति ३ तद्भिन्नत्वे सति तद्भिन्नभिन्नत्वम् । [त्समवेतः

**अन्यतरकर्मजसंयोगः**-क्रियाभाववत्समवेतत्वे सति क्रियाव-

**अन्यथाख्यातिः**-अतात्त्विकान्यथाभावेन वस्त्ववगाहनम् ⊛ १ अन्यवस्तुनोऽन्यरूपेण भानम् २ अन्यत्र स्थितस्यान्यत्र

भानमिति प्रं० ३ तदभाववति तत्प्रकारकभानम् ॥ २४२ ॥

**अन्यथानुपपत्तिः**-स्वाभावप्रयोज्यासंभवः १ उपपादकाभावप्रयोज्योपपाद्यासंभवः। [ बाह्यत्वं

**अन्यथासिद्धिः**-यस्यकारणतां विनापि सिद्धिः १कारणसामग्री-

**अन्यथोपपत्तिः**-वैपरीत्येनोपपत्तिसाम्यम् १ उपपादकत्वेनाभिमतधर्मं विनाऽप्युपपाद्यस्योपपत्तिः ॥ २४८ ॥

**अन्योन्याध्यासः**-अन्योन्यस्मिन्नन्योन्यतादात्म्यस्याध्यासः।

**अन्योन्याभावः**-तादात्म्य (।भावः१) संबन्धावच्छिन्नप्रतियोगिताकोऽभावः। प्रागभावप्रध्वंसाभाववारणाय **तादात्म्ये**ति २ अत्यन्ताभावव्यतिरिक्तत्वे सत्यनवधिरभावः ॥ २५२ ॥

**अन्योन्याश्रयः**-स्वापेक्षापेक्षित्वनिबन्धनप्रसङ्गः१ स्वग्रह[1]सापेक्षग्रहसापेक्षग्रहकः,यथा महिषभिन्नत्वं गोत्वं गोभिन्नत्वञ्च महिषत्वमित्येवं लक्षणे, गोत्वज्ञानाय महिषत्वज्ञानापेक्षा, महिषत्वज्ञानाय च गोत्वज्ञानापेक्षेति २ अन्योन्यस्या (श्रयणम् ३) व्यवहितान्योन्यापेक्षित्वम्। आत्माश्रयव्यावृत्त्यर्थमन्योन्यस्येति

**अन्वयः**-परस्परमर्थागमः १ यत्सत्त्वे यत्सत्त्वम्, यथा सर्वप्राणिहिंसनशीलित्वे सति पशुत्वाकृतिविशिष्टा काचनव्यक्तिर्यत्र यत्र भवति, तत्र तत्र सिंहपदवाच्यता २ स्वसत्तानियतसत्तावत्कार्यसम्बन्धः ॥ २५७ ॥

---

१ स्वग्रहः स्वज्ञानम्, तस्य सापेक्षोऽपेक्षाकारी यो ग्रहस्तस्य सापेक्षोऽपेक्षाकारी ग्रहो ज्ञानं यस्य स इति।

**अन्वयदृष्टान्तः**–साध्यव्याप्तं साधनं यत्र प्रदर्श्यते सः २५८

**अन्वयव्यभिचारः**-कारणसत्त्वे कार्याभावः १ स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगिकार्यकत्वम् २स्वेतरयावत्कारणाधिकर०

**अन्वयव्याप्तिः**–हेतुसाध्ययोर्व्याप्तिः १ हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यम् ॥ २६३ ॥

**अन्वयसहचारः**–कारणसत्त्वे कार्यसत्त्वम् ॥ २६४ ॥

**अपकर्षः**–विद्यमानधर्मापचयः १ उचितधर्मापेक्षातो हीनता ।

**अपकारत्वं**–अनिष्टोत्पादनत्वम् १ दुःखजनकव्यापारत्वं वा ।

**अपक्षयः**–अवयवह्रासः १ उन्नतिशून्यत्वमपक्षयत्वम् ॥२७०॥

**अपञ्चीकरणम्**–स्वेतरभूतचतुष्टयामिश्रीकरणम् ॥ २७१ ॥

**अपदेशः**-अन्य(त्प्रकाश्यान्यस्य करणम् १ )दुद्दिश्यान्यार्थमनुष्ठानं

**अपभ्रंशः**-साधुशब्दस्य शक्तिवैफल्यप्रयुक्तान्यथोच्चारणयुक्तोऽ

**अपरत्वं**-अपरव्यवहारासाधारणकारणम् । [पशब्दः

**अपरवैराग्यम्**–ब्रह्मज्ञानान्यविषयवैतृष्ण्यम् ॥ २७५ ॥

**अपरसामान्यत्वं**-व्याप्यत्वम् ॐ १ न्यूनदेशवृत्तित्वम् २७७

**अपराधः**–दण्डयोग्यकर्मकरणम् १स्वोचितकर्माकरणमिति ग्रं०

**अपरिग्रहः**-समाध्यनुष्ठानानुपयुक्तस्य वस्तुमात्रस्यासङ्ग्रहः १ विषयाणामर्जनरक्षणक्षयसङ्गहिंसारूपदोषदर्शनादस्वीकरणमिति ग्रं० २देहयात्रानिर्वाहकातिरिक्तभोगसाधनानामनङ्गीकारः २८२

**अपरोक्षज्ञानं**-विषयचित्तादात्म्यापन्नं प्रमाणचैतन्यम् २८३

**अपवादः**-अधिष्ठाने भ्रान्त्या प्रतीतस्याधिष्ठानव्यतिरेकेणाभावनिश्चयः, यथा शुक्त्यादौ भ्रान्त्या प्रतीतस्य रजतादेः शुक्तिव्यतिरेकेण नेदं रजतं किन्तु शुक्तिरित्यभावनिश्चयः १ अध्यारोपितस्याधिष्ठानमात्रपर्यवशेषणम् ॥ २८५ ॥

**अपसिद्धान्तनिग्रहस्थानं**-एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् ॥ २८६ ॥

**अपादानत्वं**-अवधिभूतत्वम् १ परकीयक्रियाजन्यविभागाश्रयत्वम्। वृक्षात्पर्णं पततीत्यादौ पर्णादेरपादानत्ववारणाय **परकीये**ति २ क्रियानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वम् २८९

**अपार्थः**-प्रत्येकवाक्यानामन्वितार्थत्वेपि यत्समुदायार्थशून्यः।

**अपूर्वं**-न पूर्वं दृष्टम् १ क्रियाजन्यकालान्तरभाविफलाव्यवहितपूर्वस्थं

**अपूर्वता**-प्रकरणप्रतिपाद्यस्य मानान्तराविषयता, यथा तन्त्वौपनिषदमित्यद्वितीयवस्तुन उपनिषदतिरिक्तमानाविषयता २९३

**अपूर्वविधिः**-प्रमाणान्तरेणात्यन्ताप्राप्तार्थविधायको विधिः, यथा व्रीहीन्प्रोक्षतीति व्रीहिप्रोक्षणविधिः ॥ २९४ ॥

**अपेक्षा**-प्रयोजकजिज्ञासा १ स्वल्पेच्छाविषयः* २ विशेष्यविशेषणयोरन्योन्याभिसंबन्धः ३ कार्यनिमित्तयोरन्योन्याभिसंबन्धः।

**अपेक्षाबुद्धिः**-विनाशकविनाशप्रतियोगिनी बुद्धिः १ अनेकैकत्वविषयिणी बुद्धिरिति ग्रन्थान्तरे ॥ २९८ ॥

**अपोहः**-प्रतिकूलतर्केण प्रकृततर्कापनयनम्* १ शिष्यस्य मिथ्या-

ग्रहणापाकरणसामर्थ्यम् २ सिद्धान्तप्रतिपक्षनिराकरणसामर्थ्यम्

**अपौरुषेयत्वं**–वाक्यार्थज्ञानापेक्षोच्चारणकमात्रप्रत्त्यानुपूर्वीशून्यत्वम् १ सजातीयोच्चारणानपेक्षोच्चारणकवृत्त्यानुपूर्वीरहितत्वं वा २ स्वानुपजीविप्रमाणजन्यसमानप्रकारविशेष्यकोच्चारणसापेक्षोच्चारणविषयत्वम् ३ पूर्वकल्पीयानुपूर्वीसमानानुपूर्वीघटितत्वमिति वे० ४ स्वसजातीयोच्चारणसापेक्षोच्चारणसामान्यकत्वम् ५ सम्प्रदायाविच्छेदत्वे अविच्छिन्नव्यवहारत्वे वा सत्यस्मर्यमाणकर्तृकत्वम्। अज्ञातकर्तृके जीर्णकूपारामादौ व्यभिचारवारणाय **संप्रदायाविच्छेदत्वे सती**ति, भारतादिषु व्यभिचारपरिहारायास्**मर्यमाणकर्तृकत्व**मिति मीमांसकाः

**अप्रतिभानिग्रहस्थानं**-उत्तरापरिस्फूर्तिः १ उत्तरार्हं परोक्तं बुद्ध्वाप्युत्तरस्यास्फूर्तिवशात्तूष्णीम्भाव इति ग्रं० ॥ ३०९ ॥

**अप्रामाण्यं**-दोषसहकृतज्ञानसामग्रीजन्यम् १ तदभाववति तत्प्रकारकत्वम्। प्रमायामतिव्याप्तिवारणाय **तदभावेति** ॥३११॥

**अबाध्यत्वम्**–त्रैकालिकनिषेधाप्रतियोगित्वम् ॥ ३१२ ॥

**अभयदानम्**–अनन्तप्राणिगणानुग्रहकरं वसत्यादिदानमिति जैनाः १ मा भैषीरित्यादिशब्दप्रयोगपूर्वकं भयनिवारणम् ३१४

**अभानावरणं**-न भातीत्याकारकाभानप्रयोजकीभूतमावरणम्

**अभावः**-नञ्शब्दोल्लेखिप्रतीतिविषयः १ प्रतियो (ग्यारोपितसंसर्गजन्यप्रती० २) गिनिरूपणाधीननिरूपणक इति ग्रं० ३ संब-

न्धत्वादृश्यभिन्नत्वे सति प्रतियोगि(ज्ञानाधीनज्ञानविषयः४)सापेक्षप्रतीतिविषयः। [घटाभावप्रमा भूतले जायते

**अभावप्रमा**-योग्यानुपलब्धिकरणिका प्रमा,यथा घटाद्यनुपलब्ध्या

**अभिचारः**–मारणोच्चाटनादिफलकतान्त्रिकप्रयोगविशेषः ३२१

**अभिज्ञाज्ञानं**–इदन्तामात्रावगाहिज्ञानम् १ विषयसंबद्धेन्द्रियजन्यं ज्ञानम्, यथाऽयं घटोऽयं पट इत्यादि ॥ ३२३ ॥

**अभिधानत्वम्**–अन्वयबोधफलकशब्दप्रयोगत्वम् ॥३२४॥

**अभिधानविधिः**–लिङ्गादिघटितं वाक्यम् ॥ ३२५ ॥

**अभिधानानुपपत्तिः**-अनुपपद्यमानवाक्यैकदेशश्रवणात्तदुपपादकीभूतार्थान्तरकल्पनम्,यथा द्वारमित्यस्य वाक्यैकदेशस्य पिधेहीति पदार्थान्तरकल्पनमन्तरानुपपत्त्या तत्कल्पनम् ३२५

**अभिधेयः**–वाक्यार्थः॥१ शास्त्रजप्रमानिवर्त्याज्ञानगोचरः ३२७

**अभिधेयविधित्वं**–कृतिसाध्यत्वे सतीष्टसाधनत्वम् ॥३२८॥

**अभिनयः**–अङ्गुल्यादिनिर्देशेन पदार्थप्रकाशनम् ॥ ३२९ ॥

**अभिनिवेशः**–आयुरभावेप्येतैः शरीरेन्द्रियादिभिरनित्यैरपि वियोगो मे माभूदित्याविद्वदङ्गनाबालं स्वभाविकः सर्वप्राणिसाधारणो मरणत्रासः १ स्वीकृतस्य पुनस्त्यागासहिष्णुत्वम्।

**अभिन्नत्वं**–भेदा(भावविशिष्टत्वम्१)नधिकरणत्वम् ॥३३३॥

**अभिन्ननिमित्तोपादानं**-निमित्तञ्च तदुपादानं चेति निमित्तोपादानम्, अभिन्नञ्च तन्निमित्तोपादानं चेति ॥ ३३४ ॥

**अभिभवः**-बलवत्सजातीय(संबन्धकृतमग्रहणम् १ )तिरस्करणं
**अभिमानत्वं**-परावज्ञाहेतुत्वम् १ आत्मन्युत्कर्षारोपत्वं वा ३४०
**अभिमुखं**-मुखस्य पुरो देशे १ अनुकूलार्थसंमुखीभवनम् ३४२
**अभिलाषः**-इष्टविषयकतृष्णा १ प्रीत्याश्रयकर्तृककिञ्चिद्विषयकेच्छा।
**अभिवादनं**-नामोच्चारणपूर्वकनमस्कारः १ पादस्पर्शपूर्वकन०
**अभिव्यक्तिः**-सूक्ष्मरूपेण स्थितस्य कारणस्य कार्यरूपेणाविर्भावः १ कार्यस्यास्ति प्रकाशते इति व्यवहारः ॥ ३४७ ॥
**अभिव्यञ्जकः**-अस्तिव्यवहारजनकः १ 'व्यञ्जक' लक्षणमप्यत्र प०
**अभिहितानुपपत्तिः**-अनुपपद्यमानसमग्रवाक्यश्रवणात्तदुपपादकीभूतार्थान्तरकल्पनम् , यथा तरति शोकमात्मविदिति प्रमातृत्वादिबन्धस्य शोकोपलक्षितस्य ज्ञाननिवर्त्यत्वश्रवणाच्छोकस्य मिथ्यात्वमन्तरानुपपद्यमानाच्छोकस्य मिथ्यात्वकल्पनम्, यथा वा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्यश्रवणाददृष्टस्य प्रकल्पनम् ॥ ३४९ ॥
**अभीष्टं**-सत्कारपूर्वककर्म *१ स्वकर्तव्यताप्रयोजकेच्छाविषयः ।
**अभ्यागतत्वं**-भिन्नस्थानीयत्वे सति स्वस्थानागतत्वम् ॥ ३५२ ॥
**अभ्यासः**-पुनः पुनरनुशीलनम् १ ध्येये वस्तुनि चित्तस्य स्थिरीकरणार्थो यत्नः * २ प्रकरणप्रतिपाद्यस्य पुनः पुनः प्रतिपादनम् , यथा तत्त्वमसीति नवकृत्वोऽभ्यासः ॥ ३५५ ॥
**अभ्युपगमवादः**-वादिबलनिरीक्षणार्थमनिष्टस्यापि स्वीकरणं

**अयथार्थानुभवः**-दुष्टसामग्रीजन्योऽनुभवः १ बाधितार्थविषयकानुभवः, यथा शुक्ताविदं रजतमिति ज्ञानम् ॥ ३५८॥

**अयुतसिद्धिः**-असम्बद्धयोरविद्यमानत्वम् ॥ ३५९ ॥

**अयोनिजशरीरं**-शुक्रशोणितसन्निपातानपेक्षं शरीरम् ३६०

**अरणिः**-घर्षणद्वाराग्निजनककाष्ठम् १ ऋच्छतीति २ ऋ अनिः

**अरिः**-स्वकृतापकारमनपेक्ष्य स्वभावक्रौर्येणापकर्त्ता ॥३६२॥

**अर्थः**-ज्ञानविषयः १ एकैकेन्द्रियमात्रग्राह्यविशेषगुणः ॐ २ अर्थ्यते प्रार्थ्यते प्राणिभिरिति, यथा वित्तादिः ॥ ३६५ ॥

**अर्थपुनरुक्तं**-समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानम्, यथा घटः कलश इति ॥ ३६६ ॥

**अर्थवादः**-विध्य( धीनप्रवृत्त्युत्तम्भकत्वम् १ )समभिव्याहृतवाक्यम् २ प्रकरणप्रतिपाद्यस्य प्रशंसनम्, यथा येनाश्रुतं श्रुतं भवतीत्यद्वितीयवस्तुप्रशंसनम् ३प्राशस्त्यनिन्दान्यतरपरं वाक्यं

**अर्थाध्यासः**-प्रमाणाजन्यज्ञानविषयत्वे सति पूर्वदृष्टसजातीयाध्यासः, यथा शुक्तौ रजताध्यासः। स्मर्यमाणगङ्गादावभिनवघटे चातिव्याप्तिनिरासाय **प्रमाणे**त्यादिपदद्वयम् ३७१

**अर्थाध्याहारः**-आकाङ्क्षितार्थानुसन्धानम् ॥ ३७२ ॥

**अर्थान्तरनिग्रहस्थानं**-प्रकृतानुपयुक्तार्थकथनम् ॥ ३७३ ॥

**अर्थापत्तिप्रमा**-अन्यथानुपपन्नदर्शनादुपपादके बुद्धिः १ अनुपपद्यमानार्थज्ञानात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा

दिवाऽभुञ्जानस्य देवदत्तस्य रात्रिभोजनं विनानुपपद्यमान-
पीनत्वज्ञानात्तदुपपादकरात्रिभोजनकल्पनम् २ सम्पाद्यज्ञान-
प्रभवं सम्पादकज्ञानम् ३ अर्थस्य पदार्थविशेषस्य आपत्ति-
र्ज्ञानमिति तत्पुरुषसमासेनार्थापत्तिशब्दः प्रमापरः, अर्थस्या-
पत्तिर्यस्मादिति बहुव्रीहिणा प्रमाणपरः ॥ ३७७ ॥

**अर्थापत्तिप्रमाणं**-उपपादक(प्रमाकरणम् १)कल्पनाहेतुभूतो-
**अर्थार्थी**–अपूर्वैश्वर्यकामः । [पपाद्यज्ञानं
**अर्पणं**–निवेशनम् १ स्वत्वत्यागानुकूलव्यापारो वा ॥ ३८२ ॥
**अलङ्कारः**-शब्दार्थयोः शोभाकारकः १ काव्यत्वाव्यापकत्वे सति
शब्दार्थगतसौन्दर्यातिरेकजनकरसाद्युपकारकशब्दार्थधर्मः ।
**अलाभविजयः**-अलाभेऽपि लाभवत्संतोष इति जैनाः ३८५
**अलीकत्वम्**–ज्ञानाविषयत्वम् १ सर्वदेशकालनिष्ठात्यन्ताभाव-
प्रतियोगित्वे सति सत्तादात्म्यशून्यत्वमिति ग्रं० २ तादृशप्र-
तियोगिताविशिष्टत्वे सत्यप्रतीयमानत्वम् ॥ ३८८ ॥
**अलोकाकाशः**-लोकत्रयाद्बहिः यत्र केवलमाकाशद्रव्यं वर्तते
इत्यार्हताः । [धनताश्रयान्यः
**अलौकिकः**-विधिमन्तरा रागादिप्राप्तभिन्नः १ लोकावगतेष्टसा-
**अल्पं**-परिच्छिन्नम् १ यस्य वस्तुनः यावती इयत्ता उचिता ततो न्यूनं
**अवकाशः**-आवरणाभावः १ अवस्थितियोग्यतासंपादकोऽवसरः
**अवग्रहः**–समस्तपदस्यावान्तरपदविच्छेदः ॥ ३९५ ॥
**अवघातः**–ताडनमात्रम् १ व्रीहिसंस्कारार्थव्यापार इति ग्रं०

**अवच्छिन्नत्वं**-सङ्कुचितत्वम् * १ तत्तत्पदार्थविशिष्टत्वम् ३९९

**अवच्छेदः**-विशेषणोपाधिना विशेषकरणम् ॥ ४०० ॥

**अवच्छेदकत्वं**-अनतिरिक्तदेशवृत्तित्वम् १ अवच्छिद्यन्यूनानतिरिक्त ( वृत्तिर्धर्मः २ ) कालीनविशेष्यसंबन्धवत्त्वमिति ग्रं०

**अवतरणत्वं**- } **अवतरणिका** } ग्रन्थप्रस्तावार्थं प्रथममुपोद्घातः १ वक्तव्यार्थविषयकजिज्ञासोत्थापकत्वम् ॥ ४०५ ॥

**अवतारः**-देवानामंशावेशवशेन प्रादुर्भावः १ उत्कृष्टावस्थात्यागित्वे सति निकृष्टावस्थाग्रहणमिति ग्रं० २ सर्वथाऽविलुप्तज्ञानक्रियाशक्तित्वे सति साक्षान्मायिकविलासवत्त्वमवतारत्वम् ४०८

**अवतारप्रयोजनं**-स्वादृष्टारचितपूर्वकसाध्वसाधुसुखदुःखहेतुत्वं

**अवधानत्वम्**-विषयान्तरसञ्चाराभावत्वम् ॥ ४१० ॥

**अवधारणं**-एकाकारावगाहिज्ञानम् १ अन्ययोगव्यवच्छेदः ४१२

**अवधिः**-अपादानभूतः ॐ १ स्वाभिधेयापेक्षया विभागाश्रयः ।

**अवयवः**-समुदायस्यांशरूपः १ अवच्छिन्नपरिमाणवान् ॐ २ तृतीयलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकवाक्यम् ३ साधनवत्ताप्रयुक्तसाध्यवत्तानुभावक इति ग्रं० ४ द्रव्यारम्भकद्रव्यत्वमवयवत्वम् ५ उपकरणमात्रत्वम् ॥४२०॥

**अवयवित्वं**-अवयवजन्यद्रव्यत्वम् । [ वक्तव्यत्वं

**अवसरसङ्गतिः**-प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्त्यनन्तर-

**अवसानं**-स्वाभाविकार्धमात्राकालव्यवायेन वर्णोच्चारणाभावः ।

**अवस्था**-कालादिकृतपरिणामान्तरदेहादेर्दशा १ आदन्तज-

नानाच्छिशुत्वम् २ पञ्चवर्षान्तं **कौमारम्** ३ दशवर्षान्तं **बाल्यम्** ४ आपञ्चदशाब्दात्**कैशोरम्** ५ षोडशाब्दात्परं **यौवनम्** ६ षष्टिवर्षात्परं **वृद्धत्वम्**।                [प्यत्रपठनीयं

**अवस्थाज्ञानं**-विषयचैतन्यावरकमज्ञानम्१ 'तूलाविद्या'लक्षणम-

**अवान्तरत्वं**-व्याप्यत्वम् * १ प्रधानान्तःपातित्वम् ॥ ४३३ ॥

**अवान्तरतात्पर्यं**-मुख्यतात्पर्यविषयसिद्धावुपायभूतार्थे तात्पर्यं

**अवान्तरप्रकरणं**-अङ्गभावनासम्बन्धिप्रकरणम् ॥ ४३५ ॥

**अवान्तरप्रलयः**-'नैमित्तिकप्रलय' वदस्य लक्षणमनुसंधेयम्।

**अवान्तरवाक्यं**-तत्त्वंपदार्थान्यतरबोधकवाक्यम् ॥ ४३७ ॥

**अवाप्तिः**—संयोगविशेषः १ स्वाधीनोच्चारणक्षम (=योग्य)त्वम्

**अविगीतत्वं**—वेदानिषिद्धत्वम् १ बलवदनिष्टाननुबन्धित्व वा।

**अविद्या**-स्वाश्रयव्यामोह(हेतुः१)करी * २ रजस्तमोऽभिभूत-मलिनसत्त्वप्रधाना * ३ असत्प्रकाशनशक्तिः ॥ ४४४ ॥

**अविद्यावृत्तिः**—साक्षादविद्योपादाना वृत्तिः ॥ ४४५ ॥

**अविनाभावः**—व्याप्यनिष्ठव्यापकनिरूपितधर्मः ॥ ४४६ ॥

**अवीतानुमानं**-निषेधमुखेन प्रवर्त्तमानं सन्निषेधकम् ॥४४७॥

**अव्यभिचारित्वं**-साध्यवदन्यावृत्तित्वम् १ साधनसमानाधिकरणात्यन्ताभावाप्रतियोगित्वमिति ग्रं० ॥ ४४९ ॥

**अव्ययः**-आद्यन्तशून्यः १ न विद्यते व्ययो विनाशो धर्मतः स्वरूपतोऽवयवतो यस्य सः।                [कसमासः

**अव्ययीभावसमासः**-नियमतः पूर्वपदार्थविशेष्यकबोधजन-

**अव्यवहितत्वं**-साक्षात्संबन्धः १ व्यवधानाभाववत्त्वम् ॥ ४५४ ॥

**अव्याप्तिः**—लक्ष्यैकदेशावृत्तित्वम् , यथा गोः कपिलत्वं लक्षणं श्वेतगवादौ लक्ष्यैकदेशेऽवृत्ति १ लक्ष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगित्वम् ॥ ४५६ ॥

**अव्याप्यः**—व्याप्तिशून्यः १ व्याप्याभाववद्वृत्तिर्वा ॥ ४५८ ॥

**अव्याप्यवृत्तित्वं**-स्वात्यन्ताभावसमानाधिकरणत्वम् १ स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमिति ग्रं० ॥ ४६० ॥

**अव्युत्पन्नत्वं**-सिद्धिशून्यत्वम् * १ पदज्ञानरहितत्वम् ॥ ४६२ ॥

**अशुचित्वं**—वैदिककर्मानर्हत्वप्रयोजको धर्मविशेषः ॥ ४६३ ॥

**अशुद्धः**—निषिद्धानुष्ठाता * १ व्याकरणादिलक्षणाननुसारी ।

**अशुद्धिः**—कर्तृद्रव्यादेः स्पर्शनाद्यनर्हतापादको दोषविशेषः ।

**अशुभवासना**-निषिद्धनिषिद्धसमविद्याकर्मतत्संस्कारतत्फलसंस्काररूपा । **निषिद्धा विद्या** स्त्रीचिन्तनादिरूपा, **निषिद्धसमा** यदृच्छया काकविडालाद्यवेक्षणात्मिका, **निषिद्धं कर्म** पलाण्डुभक्षणादि, **निषिद्धसमं** तृणच्छेदनादि, एतेषां चतुर्णां संस्कारास्तथैतेषां ततोपि पूर्वजन्मकृतानां यानि जन्मान्तरे फलानि नरकाद्याप्तिरूपाणि तेषां च संस्कारा इत्यशुभवासनोदाहरणानि

**अशेषः**—शेषहीनः १ विधेयशून्यावृत्त्युद्देश्यतावच्छेदकः ॥ ४६९ ॥

**अशौचं**-शरीरमनसोर्मालिन्यम् १ विहितकर्मानधिकारित्वसंपादकं

**अश्रद्धा**-गुरुशास्त्रोपदिष्टेऽर्थे इदमेवं न भवत्येवेति विपर्ययबुद्धिः

**असत्ख्यातिः**-असत (शून्यस्य) एवाध्यस्तपदार्थाकारेण भानं
**असत्यत्वं**-प्रागभावप्रतियोगित्वम् १ वस्तुस्वभावविरोधिधर्मः ।
**असत्त्वं**-सर्वदेशकालसंबन्धिनिषेधप्रतियोगित्वम् १ सद्वैलक्षण्ये सत्यपरोक्षप्रतीत्यविषयत्वमिति ग्रं० २ सत्तास्फूर्तिशून्यत्वम् ।
**असदावरणं**-(कूटस्थः)नास्तीत्यसत्त्वप्रयोजकीभूतमावरणम् ।
**असदुत्तरम्**-दुष्टमुत्तरम् १ उत्तरव्याघातकमुत्तरमिति ग्रं०
**असभ्यः**-सभायामनुपयुक्तः ॥ ४८३ ॥
**असमवायिकारणं**-कार्यकारणभावसंबन्ध्येकार्थसमवेतकारणं
**असंबद्धः**-संबन्धरहितः १ परस्परम(न्वयाभावः २)नन्वितः ।
**असंभवः**-अनुपपन्नः ※ १ लक्ष्यमात्रा(वर्तनम् २)वृत्तित्वम्, यथा गोरेकशफवत्त्वलक्षणं लक्ष्यगोमात्रावृत्ति, गोर्द्विशफवत्त्वात् ३ लक्ष्यतावच्छेदकव्यापकीभूताभावप्रतियोगित्वम् ॥ ४९१ ॥
**असम्भावना**-बलवन्निषेधकोटिकः संशयः ॥ ४९२ ॥
**असाधारणकारणत्वं**-कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् १ कार्यतावच्छेदकावच्छिन्नकार्यानुत्पादकत्वे सति कार्यविशेषोत्पादकत्वमिति ग्रं० ॥ ४९४ ॥
**असाधारणधर्मत्वम्**-तद्वृत्तित्वे सति तदितरावृत्तित्वम् १ लक्ष्यतावच्छेदक(समनियतत्वम् २) व्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वम् । अव्याप्त्यसंभवग्रस्तयोर्वारणाय सत्यन्तम्, अतिव्याप्तस्य वारणाय विशेष्यम् ॥ ४९७ ॥

**असूया**-गुणेषु दोषाविष्करणम् १ परकीयगुणेषु दोषारोप इति ग्रं०

**असंसक्तिज्ञानभूमिका**-सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि निर्विकल्पकसमाध्यवस्था ॥ ५०० ॥

**अस्तित्वम्**-सत्तावत्त्वम् १ कालसम्बन्धित्वं वा ॥ ५०२ ॥

**अस्तेयं**-परस्वानपहरणम् १ अदत्तादानरूपपरस्वहरणराहित्यं

**अस्त्रं**-रिपुकर्तृकप्रहारसाधनम् १ मन्त्राभिमन्त्रितत्वमस्त्रत्वम् ।

**अस्पष्टब्रह्मलिङ्गकत्वं**-संभाव्यमानस्वारस्यजीवलिङ्गाभिभूत-ब्रह्मलिङ्गकत्वम्, यथा सर्वत्र प्रसिद्धाधिकरणे जीवे विषये स्वरसानि मनोमयत्वादीनि सत्यकामत्वादिब्रह्मलिङ्गान्यभिभवन्तीति ।

**अस्मिता**-बुद्ध्यादावभेदाभिमानः ॐ १ अहङ्कार (स्य सूक्ष्मावस्था २) धर्म्यध्यासः ३ सामान्याहङ्कारत्वमस्मितात्वम् ५११

**अहङ्कारः**-अभिमानात्मिकान्तःकरणवृत्तिः १ अह (मितिक्रियतेऽनेनेति २) मुत्कृष्टेत्याकारकसंस्कारः ॥ ५१४ ॥

**अहङ्ग्रहोपासना**-उपास्यस्वरूपस्य स्वाभेदेन चिन्तनम् ५१५

**अहिंसा**-वाङ्मनःकायैः सर्वभूतानामनभिद्रोहः १ प्राणवियोगप्रयोजकव्यापारराहित्यमिति ग्रं० २ अशास्त्रीयप्राणिपीडनाभावः

## आ

**आकाङ्क्षा**-वाक्यसमयग्राहिका १ अन्वयानुपपत्तिरिति ग्रं० २ येन पदेन विना यस्य पदस्यान्वयबोधाजनकत्वं तेन तस्य समभिव्याहारः, यथा द्वारमित्यनेन पिधेहीत्यादेः ३ तादृश-

शाब्दबोधे तादृशशाब्दबोधाभावः ४ अन्वयबोधसमर्थत्वे सत्यजनिततात्पर्यविषयान्वयबोधकत्वमाकाङ्क्षात्वम् ॥५२२॥

**आकारमौनम्**–अवचनमात्रमौनम् ॥ ५२३ ॥

**आकाशं**-आवरण(ाभावाधिकरणम् १)विरोध्यवकाशः २ शब्द-(समवायिकारणम् ३)गुणकम्। असम्भववारणाय शब्दगुणोभयम्। ४संयोगाजन्यजन्यविशेषगुणसमानाधिकरणविशेषाधिकरणम्।

**आकृतिः**-अवयवसं ( निवेशविशेषः १) स्थानविशेषः ॥५३०॥

**आक्षेपः**–प्रतिषेधपुरःसरोक्तिः १ समानवित्तिवेद्यत्वम् ५३२

**आख्याततत्वं**–सुब्भिन्नत्वे सति सङ्ख्याबोधकप्रत्ययत्वम् ५३३

**आख्यानम्**-पूर्ववृत्तकथनम् १ स्वयं दृष्टार्थकथनं वा ॥५३५॥

**आख्यायकः**–परोक्तस्यान्यत्र कथकः ॥ ५३६ ॥

**आख्यायिका**–कथाविशेषः १ उपलब्धार्थबोधिकेति ग्रं०

**आगमः**–अवयवत्वावच्छिन्नविधेयताश्रयः ॐ १ समयबलेन सम्यक्परोक्षानुभवसाधनम् २ संदिग्धार्थसिद्धिहेतुरिति ग्रं० ३ आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ, मतं च वासुदेवस्य तस्मादागममुच्यते ॥ ५४२ ॥

**आगमनं**-प्रयोक्तृसन्निकृष्टप्रदेशानुयोगिकसंयोगानुकूलव्यापारः

**आग्रहः**–विरुद्धार्थविषयकोऽभिनिवेशः १ दुष्टादुष्टविषयको०

**आचारः**समयानुकूलव्यापारः १धर्माविरुद्धशारीरिकव्यापारो वा

**आचार्यः** मतप्रस्थापकः १ मन्त्रव्याख्याकृद्वा २ आचितोति

च शास्त्रार्थमाचारे स्थापयत्यपि, स्वयमप्याचरेद्यस्तु स आचार्य इति स्मृतः ३ स त्रिविधः–चोदको दर्शयेन्मार्गं बोधकः स्थानमाचरेत् ,मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वा परमश्नुते।

**आज्ञा**–निकृष्टस्य भृत्यादेः कृत्यादौ प्रवृत्त्यर्थव्यापारः १ वक्त्रनुमतत्वे सति कर्तुरनिष्टहेतुत्वमाज्ञात्वम् ॥ ५५३ ॥

**आज्ञाकारी**–आज्ञानुसारेण कर्मकर्ता ॥ ५५४ ॥

**आज्ञाभङ्गः**–आदेशान्यथाकरणम् १ स्वविषयेषु प्रचाराभावः।

**आडम्बरः**–परवञ्चनार्थकृत्रिमबहुविधचेष्टितम् ॥ ५५७ ॥

**आतमख्यातिः**-विज्ञानात्मन एवाध्यस्तपदार्थाकारेण भानम्।

**आतमघाती**–व्यापादयेद्वृथात्मानं स्वयं योग्न्युदकादिभिः, अवैधेनैव मार्गेण आत्मघाती स उच्यते ॥ ५५९ ॥

**आतमज्ञानं**–प्रत्यगात्मनि देहाद्यतिरिक्तत्वप्रकारको देहादौ वा प्रत्यगात्मातिरिक्तत्वप्रकारको निश्चयः। [हेतुर्मदः

**आतममदः**-अहङ्कारभरितस्य विद्यादिभिर्मम समः को वेतिप्रज्ञा-

**आत्मा**–चैतन्याश्रयः १ अमूर्तसमवेतद्रव्यत्वापरजातिमानिति नै० २ सर्वदेहेषु पूर्णः ३ अहंप्रत्ययविषयः ४ स्वयंप्रतीतिविषयत्वमात्मत्वम् ५ परमप्रेमास्पदत्वमिति वै० ६ यच्चाप्नोति यदादत्ते यच्चात्तिविषयानिह, यच्चास्य संततो भावस्तस्मादात्मेति कथ्यते

**आत्माश्रयः**-स्वग्रहसापेक्षग्रहकः १ स्वापेक्षापादकप्रसङ्गः, यथा

ज्वरोपसर्गयुक्ते रोगो ज्वर इत्युक्तौ ज्वराज्ञानवन्तमुद्दिश्य ज्वरे लक्षणीये ज्वरज्ञानापेक्षायां तदभावात्कथं ज्वरोपसर्गज्ञानं संभविष्यति २ स्वस्याव्यवहितस्वापेक्षित्वम् ॥ ५६९ ॥

**आत्यन्तिकदुःखनिवृत्तिः**-स्वाधिकरणदुःखप्रागभावासमानाधिकरणा दुःखनिवृत्तिः १ यादृश्या दुःखनिवृत्तेरुत्तरं पुनर्दुःखान्तरं नोत्पद्यते तादृशी दुःखनिवृत्तिरिति ग्रं० ॥ ५७० ॥

**आत्यन्तिकप्रलयः**-ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः १ अज्ञानसहितसकलभावकार्योच्छेदः । [प्रथमं दीयते गृह्यते

**आदिः**समुदायविशिष्टः १ परस्मिन्सति यस्मात्पूर्वो नास्ति सः २ आ-

**आदेशः**-शासनम् १ स्थान्यर्थाभिधानसमर्थः ॥ ५७७ ॥

**आधारः**-अधिकरणम् १ पतनप्रतिबन्धकः * २ शवले संसृष्टतयाध्यस्तोऽधिष्ठानांशः ३ अध्यस्तेन सहाभिन्नप्रतीतिविषयः ५८१

**आधिदैविकतापः**-देवान् यक्षादीन् दिवःप्रभवान् वातवर्षातपशीतोष्णादीन् वाऽधिकृत्य जायमानस्तापः ॥ ५८२ ॥

**आधिभौतिकदुःखम्**-भूतानि जरायुजाण्डजस्वेदजोद्भिज्जरूपाणि शौरवैरिकुक्कुरसिंहव्याघ्रमहिषपक्षिसर्पयूकादंशमशकवृश्चिकनक्रमकरवृक्षशिलाप्रभृतीनि चराचरजातीयानि अधिकृत्य=निमित्तीकृत्य जायमानं दुःखम् ॥ ५८३ ॥

**आध्यात्मिकतापः**-शरीरमनसी अधिकृत्य जायमानस्तापः ।

----न्दः-दुःखाभावः * १ सात्त्विकैकाग्रबुद्धिप्रतिबिम्बितः सुख-

रूप आत्मा २ निरुक्तात्मप्रतिबिम्बिता वृत्तिर्वा ३ निरुपाधिकेष्टत्व

**आनन्दमयकोशः**-सुखाकारवृत्तिमदन्तःकरणमज्ञानपर्यन्तम् १ आनन्दप्रचु(रः कोशः २)रत्वे सति कोशवत्प्रत्यक्चेतनाच्छादकः

**आनुपूर्वी**-तदुत्तरत्वविशिष्टतदुत्तरत्वादि २ तदुच्चारणानन्तरोच्चारणविषयत्वम् ॥ ५९४ ॥

**आनुषङ्गिकं**-उद्देश्यान्तरप्रवृत्तस्य तत्कर्मनान्तरीयकतया प्राप्तम्

**आपत्तिः**-सम्यग्वर्त्तनोपायानुपलम्भः ॥ ५९६ ॥

**आपातत्वं**-संशयादिग्रस्तत्वम् १ अविचारितवाक्यजन्यत्वं वा ।

**आपातज्ञानं**-अज्ञाननिवृत्तावसमर्थं ज्ञानम् १ अप्रामाण्यशङ्कास्पदज्ञानं

**आप्तत्वं**-प्रयोगहेतुभूतयथार्थज्ञानवत्त्वम् १ लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेशकर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्वमिति ग्रं० २ रागादिरहितत्वे सति सकलवस्तुविषयकानुभव-[प्रयोज्यनिश्चयवत्त्वं

**आम्नायः**-गुरुपरम्परागतोपदेशः।

**आयुः**-जीवितावच्छिन्नः कालः ॥ ६०५ ॥

**आयुर्वेदः**-आयुर्हिताहितं व्याधेर्निदानं शमनं तथा,
विद्यते यत्र विद्वद्भिः स आयुर्वेद उच्यते ॥ ६०६ ॥

**आरम्भः**-आद्यप्रवृत्तिः १ प्राथमिकव्यापारोपक्रम इति ग्रं०

**आरम्भकं**-समवायिकारणम् १ अनेककारणसंयोगवत्त्वे सति का-[र्यजनकं

**आरम्भकार्यं**-स्वभिन्नत्वे सति समवेतम्।

**आरादुपकार्यङ्गं**-'फलोपकार्यङ्ग' वदस्य लक्षणमनुसंधेयम्।

**आराधनं**-गुर्वादेरनुकूलाचरणम् १ गौरवितनिष्ठप्रीतिहेतुक्रिया २ गौरवप्रयुक्तप्रीत्यवच्छिन्नक्रियेति प्रं० ॥ ६१२ ॥

**आरोपः**-अतद्वति तत्प्रकारकज्ञानम् ॥ ६१३ ॥

**आर्तः**-पीडितः १ नष्टेष्टवस्त्वेच्छुः २ भ्रष्टैश्वर्यकाम इति प्रं०

**आर्थीभावना**-प्रयोजनेच्छाजनितक्रियाविषयव्यापारः ६१६

**आर्यः**-सर्वोत्तमः १ श्रेष्ठकुलोत्पन्नो वा २ वेदोक्तप्राचीनजातिविशेषः ३ कर्तव्यकारकत्वे सत्यकर्तव्याकारकत्वे सति प्रकृताचारवत्वं

**आर्यावर्त्तः**-सर्वोत्तमदेशः १ विन्ध्यहिमाचलयोर्मध्यदेशः ६२२

**आलयविज्ञानं**-कर्मानुभववासनालयाधिकरणं विज्ञानम् १ आलयं लयपर्यन्तं स्थायि विज्ञानम् ॥ ६२३ ॥

**आलस्यं**-प्रयत्नेन कर्तव्ये कार्ये श्रद्धावैधुर्येणोत्साहाभावः ६२४

**आलापनं**-परस्पर (सम्भाषणम् १) कथोपकथनम् ॥ ६२६ ॥

**आलिङ्गनं**-अङ्गनाङ्गसंयोजनम् १ प्रीतिपूर्वकपरस्पराश्लेषो वा ।

**आवरणं**-प्राप्तप्रतिषेधः १ अस्ति प्रकाशते इति व्यवहारयोग्ये नास्ति न प्रकाशते इति व्यवहारः ॥ ६३० ॥

**आवरणशक्तिः**-मानसिकाविद्या १ स्वाश्रयात्माद्यावरणानुकूलमज्ञाननिष्ठं सामर्थ्यम् । [पुनरनुसंधानं

**आवृत्तिः**-भूय एकजातीयक्रियाकरणम् १ स्वस्थानस्थितस्य

**आशा**-दीर्घाकाङ्क्षा १ इदं कृत्वेदं करिष्यामीति सङ्कल्पविकल्पप्रवाहानुपरमः । [वा वाञ्छितार्थप्रार्थनं

**आशीर्वादमङ्गलं**-आशीर्वचनम् १ परमेश्वरात्स्वस्य स्वशिष्यस्य

**आश्रयासिद्धत्वं**-पक्षतावच्छेदकाभाववत्पक्षकत्वम् ॥६३९॥

**आसक्तिः**-विषयान्तरपरिहारेणैकविषयावलम्बनम् ॥६४०॥

**आसत्तिः**-यत्पदार्थेन सह यत्पदार्थस्यान्वयोपेक्षितस्तयोः पदयोरव्यवधानम् १ शक्तिलक्षणान्यतरसंबन्धेनाव्यवधानेन पदजन्यपदार्थोपस्थितिः । प्रमाणान्तरजन्यपदार्थोपस्थितिवारणाय [पदजन्येति

**आसनफलं**-द्वन्द्वानभिघातः ।

**आसनं**-स्थिरसुखम् १ सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम्, आसनं तद्विजानीयादन्यत्सुखविनाशनम् ॥६४५॥

**आसनोपायः**-प्रयत्नशैथिल्यम् १ अनन्तसमापत्तिर्वा ॥६४७॥

**आस्तिकत्वं**-परलोकसत्ताविषयकाबाधितज्ञानवत्त्वम् १ शास्त्राद्युक्तविषयविषयकविश्वासवत्त्वमिति प्रं० ॥ ६४९ ॥

**आहार्यज्ञानं**-बाधकालीनेच्छाजन्यं ज्ञानम्, यथा माणवके प्रेम्णा चिन्तामणिबुद्धिः ॥ ६५० ॥

**आहुतिः**-देवोद्देशेन मन्त्रेणाग्नौ हविःप्रक्षेपः ॥ ६५१ ॥

## ✥ इ ✥

[शेषः

**इङ्गितं**-मनोभिप्रायसूचकभ्रूक्षेपकटाक्षवीक्षणादिरूपकायचेष्टावि-

**इच्छा**-इयं मे स्यादित्याशाविशेषः १ इष्टसाधनताज्ञानजन्योभिलाष इति प्रं० २ इच्छामीत्यनुभवविषयवृत्तिगुणत्वव्याप्यजातिमती ३ यत्नसंस्कारभिन्नत्वे सति संबन्धानवच्छिन्नप्रकारताकत्वं

**इडानाडी**-वामनासिकास्था ( चन्द्र ) नाडी ॥ ६५८ ॥

**इतिकर्तव्यता**—कर्तव्यप्रकारः * १ कथम्भावाकाङ्क्षापूरकः ।

**इतिहासः**—पुरावृत्तप्रकाशको ग्रन्थविशेषः २ धर्मार्थकाममोक्षाणामुपदेशसमन्वितम्, पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते ६६२

**इदन्ता**—सन्निकृष्टवाचित्वम् * १ प्रत्यक्षबुद्धिविषयत्वम् ॥ ६६४॥

**इन्द्रजाल**-प्रत्यक्षतो मिथ्यार्थप्रदर्शनम् १ मन्त्रौषधादिनाद्भुतवस्तुदर्शकव्यापार इति ग्रं० ॥ ६६६ ॥

**इन्द्रियं**-सुखदुःखानुकूलसाक्षात्कारप्रमितिक्रियान्यतरकरणमतीन्द्रियम् । आलोकादावतिव्याप्तिवारणायातीन्द्रियमिति, धर्मादावतिव्याप्तिवारणायाद्यविशेषणम्, अनुमित्यादिकरणेतिव्याप्तिवारणाय **साक्षादिति** १ शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयः । आत्मन्यतिव्याप्तिवारणाय **सत्यन्तम्**, कालादावतिव्याप्तिवारणाय विशेष्यम् ६७०

**इष्टं**-इच्छाविषयः * १ धर्मज्ञापकम् २ पूजनयोग्यत्वम् ॥ ६७४॥

**ईर्ष्या**—अनिष्टानुपेक्षणम् १ परसम्पदुत्कर्षासहिष्णुतेति ग्रं० २ विरोधिधर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेषः ॥ ६७६॥

**ईश्वरः**—नित्यज्ञानाधिकरणमिति नै० १ क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः २ त्रैकालिकबन्धशून्यः । बन्धशून्यमात्रोक्तौ मुक्तप्रकृतिलयेष्वतिव्याप्तिरिति **त्रैकालिकत्वं** बन्ध-

---

१ शब्देतरे ये उद्भूतविशेषगुणाः घटनिष्ठरूपादयस्तदनाश्रयत्वं ज्ञानस्य कारणभूतो यो मनःसंयोगस्तदाश्रयत्वञ्च चक्षुरादावस्तीत्यर्थः ।

विशेषणं तथा च मुक्तेषु भूतबन्धस्य प्रकृतिलयेषु च भाविबन्धस्य सत्त्वान्न तन्नातिव्याप्तिरीश्वरस्य तु त्रैकालिकबन्धशून्यादिति योगमञ्जर्याम् ३ कर्तुमकर्तुमन्यथा वा कर्तुं समर्थः ४ जगदुत्पत्तिस्थितिसंहारकर्तेति ग्रं० ५ माया (विशिष्टचैतन्यम् ६) प्रतिबिम्बितं चैतन्यम् ७ चैतन्यमित्येकसत्तावादे ८ समष्टिकारणशरीरोपहितं चैतन्यमिति वै० ९ ब्रह्मणस्तटस्थलक्षणमप्यत्र०

**ईश्वरसाक्षी**-मायातद्वृत्त्यन्यतरोपहितं चैतन्यम् ॥ ६८७ ॥

**ईश्वरप्रणिधानं**-सर्वकर्मणां भगवत्यर्पणम् १ भगवद्भक्तिर्वा ।

**ईश्वराश्रयप्रमा**-ईक्षणापरपर्यायस्रष्टव्यविषयाकारमायावृत्तिप्रतिबिम्बिता चित्

## उ.

**उच्चारणं**-कण्ठताल्वाद्यभिघातेन शब्दजनकव्यापारः॥६९१॥

**उत्तरत्वं**-दोषभञ्जनत्वम् १ परपक्षप्रतिषेधत्वं वा २ जिज्ञासितविषयावेदकत्वम् ३ प्रश्ननिवर्तकत्वमिति ग्रं० ४ सिद्धान्तानुकूलतर्कोपन्यासत्वम् ꣿ ५ क्रियाजन्यसंयोगानुयोगित्वम् ६ मेरुसन्निहितदेशावच्छिन्नत्वम् ॥ ६९८ ॥

**उत्तरमीमांसा**-वेदान्तानां ब्रह्मणि तात्पर्यनिर्णायिका मीमांसा

**उत्तेजकत्वं**-प्रोत्साहकत्वम् ꣿ १ शक्त्यनुकूलत्वम् २ प्रतिबन्ध(के विद्यमाने सति कार्यजनकत्वम् ३) ककोटिप्रविष्टाभावप्रतियोगित्वमिति ग्रं० ४ कार (णाभावातिरिक्तकार्याभावप्रयोजकाभावप्र० ५) णीभूताभावप्रतियोगितावच्छेदकीभूताभावप्र० ॥७०५

**उत्पत्तिः** उत्तरक्षणसंबन्धः १ कार्यस्याद्यक्षणसत्तासंबन्धो वा २

स्वकारणसंसर्गः ३ स्वाधिकरण (समयध्वंसानधिकरणसमयसंबन्धः ४) क्षणावृत्तिप्रागभावप्रतियोगिक्षणसंबन्ध इति ग्रं० ५ प्राथमिकप्रतीतिविषयप्रवृत्तिसाधनम् ॥ ७११ ॥

**उत्पत्तिविधिः**–कर्मस्वरूपमात्रबोधको विधिः ॥ ७१२ ॥

**उत्पातः**–प्राणिनां शुभाशुभसूचको भूतविकारः ॥ ७१३ ॥

**उत्सर्गः**–सामान्य (नियमः १) विधानम्, यथा यत्र यत्र चैतन्यं तत्र तत्र कर्तृत्वमिति सम्भावना २ भूयोदर्शनम् ॥ ७१६ ॥

**उत्सर्जनं**-स्वानुयोगिकप्राप्तवस्तुप्रतियोगिकसंबन्धविर(हानुकूलो

**उत्सवः**–आनन्दजनकव्यापारः । [व्यापारः १) हेच्छा

**उत्साहः**-अन्यैरशक्यतयाऽवधृतेप्यवश्यकर्तव्यता बुद्धिः ७१९

**उत्साहव्यसनं**-नृत्यगीतादिदर्शनेच्छाहेतुर्व्यसनम् ॥७२०॥

**उदासीनः**-रागद्वेषशून्यः ❋१ पक्षपातरहितः २ विवदमानयो(रुभयोरप्युपेक्षकः ३) रेकतरपक्षानवलम्बक इति ग्रं० ॥ ७२४ ॥

**उदाहरणं**-साध्यसाधनव्याप्तिप्रदर्शकम् १ व्याप्तिप्रतिपादकदृष्टान्तवचनं वा २ इतरार्थान्वितस्वार्थबोधकन्यायावयवः ❋ ३ कस्यचिद्विषयस्य सप्रमाणत्वस्थापनार्थं तादृश विषयान्तरोल्लेखनं

**उद्देशः**–गुणैः प्रापणम् ❋ १ नाममात्रेण वस्तुसङ्कीर्तनम् २ वस्तुप्रतिपादकनाममात्रमिति ग्रं० ३ सङ्क्षेपकथनम् ॥७३२॥

**उद्देश्यत्वं**-इच्छाविषयत्वम् ❋१ प्रवृत्तिनिमित्तत्वम् २ विधेय(ान्वयित्वम् ३ ) तन्निरूपकत्वमिति नै० ४ मानान्तरप्राप्तत्वमिति मी० ४ सिद्धप्रमितिविशिष्टतयासिद्धत्वम् ॥ ७३७ ॥

**उद्बोधकत्वं**-स्मृतिप्रयोजकत्वम् * १ उद्दीपकत्वम् ॥ ७३९ ॥

**उद्भूतत्वं**-रूपादिविशेषगुणगतो धर्मविशेषः १ प्रकटीभूतत्वम् ।

**उन्नतिः**-समृद्धिः *१पराक्रमदानादि(जन्यं यशः २)स्मृतिजन्यो-

**उपकरणं**-प्रधानसाधकम् १ उपक्रियतेऽनेनेति । [त्साहः

**उपकारः**-सहकारि(लाभः १)कारणजन्यः सामर्थ्यविशेषः ७४८

**उपकुर्वाणब्रह्मचारी**-सावधिब्रह्मचर्यवान् १ विवक्ष्यन् (=वि-
वाहं करिष्यमाणः) गृहीतब्रह्मचर्यव्रतः ॥ ७४९ ॥

**उपक्रमः**-उपायज्ञानपूर्वकारम्भः *१ तात्पर्यनिर्णायको हेतुविशेषः

**उपक्रमोपसंहारलिङ्गं**-प्रकरणप्रतिपाद्यस्याद्यन्तयोः प्रतिपा-
दनम्, यथा सदेवसौम्येदमग्र आसीदिति ॥ ७५० ॥

**उपचारः**-शक्यार्थत्यागेनान्यार्थबोधनम् १ अनियतसंबन्धेना-
न्यत्र वृत्तिः, यथा 'मञ्चाः क्रोशन्ती'त्यादौ पुरुषैः समं मञ्चसंब-
न्धोऽनियतः २ परसंतोषार्थे (वचनम् ३ )ान्यार्थकथनम् ७५३

**उपजीवकत्वं**-जीवनोपायत्वम् * १ इतरालम्बकत्वम् २ पर-
म्परया साक्षाद्वा कार्यत्वमिति मणिप्रभायाम् ३ उपजीवति
कारणाश्रितं भवतीति व्युत्पत्त्योपजीवकशब्दः कार्यपरः ७५७

**उपजीव्यत्वं**-परम्परया साक्षाद्वा जनकत्वम् १ उपजीव्यते का-
र्येणाश्रीयते इति व्युत्पत्त्योपजीव्यशब्दः कारणपरः ॥७५९॥

**उपदेशः**-कृतिविषयः *१ हितकथनम् २ गुप्तवार्ताविष्कार इति
ग्रं० ३ धर्मविशिष्टो व्यापारः ४ प्रतिपत्त्यनुकूलव्यापारः ७६४

**उपदेशकः**–अज्ञातज्ञापकः । [वचनं

**उपनयः**-प्रकृतोदाहरणोपदर्शितव्याप्तिमद्धेतुविशिष्टपक्षबोधक-

**उपनिषद्**ज्ञाननिवारिणी विद्या १ ब्रह्मविद्याप्रतिपादकवेदशिरो भाग॰

**उपन्यासः**-वाक्योपक्रमः १ तद्बोधकवाक्यप्रयोग इति ग्रं० ७७१

**उपपत्तिः**-साधकप्रमाणोपन्यासरूपा युक्तिः * १ प्रकरणप्रति-
पाद्य (ार्थनिर्णायकत्वम् २ ) स्य दृष्टान्तैः प्रतिपादनम्, यथा
सौम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिना मृदा-
दिदृष्टान्ैरद्वितीयवस्तुप्रतिपादनम् । [भक्तिः

**उपपदविभक्तिः**-पद(ान्तरयोग)निमित्तीकृत्य जायमाना वि-

**उपपादकत्वं**-उपपाद्याभावव्याप्याभावप्रतियोगित्वम् ॥७७७

**उपपाद्यत्वं**–उपपादकाभावव्यापकाभावप्रतियोगित्वम् ७७८

**उपमर्दः**–पूर्वधर्मिविनाशनेन धर्म्यन्तरोत्पादनम् ॥ ७७९ ॥

**उपमा**·उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्या १ वैधर्म्यावि-
षयैकवाक्यविषयकत्वे सतीवादिवाच्यमुभयसंबन्धिसाधर्म्यम् ।

**उपमानं**-संज्ञासंज्ञिसंबन्धप्रमाकरणम् १ उपमितिकरणम् । कुठा-
रादिवारणाय **मिती**ति,प्रत्यक्षादिवारणायोपेति २ व्यापारव-
त्तासंबन्धेनोपमित्यसाधारणकारणम् ३ सदृशदर्शनादसन्निकृष्टा-
र्थज्ञानमिति मी० ४साधारणधर्मवत्त्वे(न प्रसिद्धपदार्थः५)नेषदि-
तरपरिच्छेदकत्वमुपमानत्वम् ६ सादृश्यप्रतियोगित्वम्॥७८८॥

**उपमितिः**-सञ्ज्ञासंज्ञिसंबन्धज्ञानम्।अनुमित्यादिवारणाय संब-

न्धेति, संयोगादिवारणाय संज्ञासंज्ञीति१ सादृश्यज्ञान(ादप-
रत्रासन्निकृष्टे सादृश्यज्ञानम् २)जन्यं ज्ञानम् ३ सादृश्यवैसादृश्या-
न्यतरधीकरणिका धीरिति खण्डनोद्धारे ४ शक्तिप्रकारकज्ञानं

**उपमेयः**-उपमाविषयः १ सादृश्या (श्रयः २) नुयोगित्वमुपमेयत्वं

**उपयोगः**-साक्षात्परम्परया वा कार्यजननम् १ इष्टसिद्धिसाधना-
**उपयोगी**-इष्टसाधनम् १ कार्यकारकः। [नुकूलव्यापारः

**उपरतिः**-कर्मादौ तत्साधने च दोषदर्शनपूर्विका घृणा १ ज्ञा-
नार्थविहितनित्याद्यागमजन्यकर्मसंन्यास इति ग्रं० ॥ ८०३ ॥

**उपलक्षणत्वं**-स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वम् १
स्वार्थबोधकत्वे सतीतरार्थबोधकत्वम् * २ स्वासम्बन्धिविशेष्य-
केतरभेदबुद्धिजनकत्वम् ३ विशेष्यानन्वयित्वे कादाचित्कत्वे वा
सति व्यावर्तकत्वम्, यथा काकादिकं देवदत्तगृहादेः ॥८०७॥

**उपलक्षितत्वं**-चिह्नद्वाराप्रकाशितत्वम् १ स्वसमानाधिकरण-
स्वोत्तरकालीनस्वप्रतियोगिकाभाववत्त्वसम्बन्धेन स्वसंबन्धित्वं

**उपवासः**-अनाहारः १ अहोरात्रभोजनाभावः २ उपावृत्तस्य पापे-
भ्यो यस्तु वासो गुणैः सह, उपवासः स विज्ञेयः सर्वभोगविवर्जितः

**उपशयः**-औषधादिजनितसुखानुबन्धः * १ समीपशयनम्।

**उपसर्गः**-रोग(विकारः १) ोपद्रवः * २ धात्वधिकरणसंयोगगो-
चरककालिकधात्वर्थबोधकतावच्छेदकः ३ जन्यबोधविषयीभूत-
क्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राद्यन्यतम इति ग्रं०

**उपसर्जनत्वं**-संमार्गसाधकत्वम् * १ स्वार्थविशिष्टार्थान्तरबोध

कत्वम् २ अन्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वं
**उपसंहारः**सम्यग्हरणम् १ प्रस्तावितशेष इति ग्रं० २ विस्तरेण निरूपितस्य पदार्थस्य सारांशकथनेन तन्निरूपणसमापनम् ३ एकत्र श्रुतार्थस्यान्यत्रान्वयार्थमुपक्षेपः, यथा गुणोपसंहारः ४ ग्रन्थतात्पर्यावधारकलिङ्गविशेषः ५ सामान्यप्राप्तस्य विशेषे नियमनमिति मी०
**उपस्थः**—व्यवायानन्दसाधनमिन्द्रियम् १ सुखक्रियासाधनमि०
**उपाख्यानं**-श्रुतार्थकथनम् १ पूर्ववृत्तान्तकथनम् ॥ ८२९ ॥
**उपादानकारणं**-कार्या (भिन्नकारणम् १) न्वितं कारणम्, यथा घटादेर्मृदादि। रूपादावतिव्याप्तिवारणाय **कारण**मिति २ स्वतादात्म्यापन्नकार्यजनकम् ३ कार्याधारत्वे सति कार्यजनिहेतुः। निमित्तकारणवारणाय सत्यन्तम्, भूतलादिवारणाय विशेष्यदलं
**उपादेयः**-विधेयः १ उपादानजन्यः ॐ २ आदानक्रियाविषयः ८३६
**उपाधिः**—संमानसूचकः शब्दः ॐ १ उपसमीपे स्थित्वा स्वीयं रूपमन्यत्रादधाति २ स्वस्मिन्निव स्वसंसर्गिणि स्वधर्मासञ्जकः ३ स्वान्वितांशविधेयानन्वयित्वे सति वर्तमानत्वे सति व्यावर्तकत्वम्, यथा जपाकुसुमादिकं स्फटिके लौहित्योपाधिः। प्रथमसत्यन्तेन नीलं घटं पश्येत्यादौ नीलत्वादेरुपाधित्वनिरासः, काकैर्गृहं पश्येत्यादौ काकादेर्द्वितीयसत्यन्तेन निरासः, घटपटौ पश्येत्यत्र परस्परस्य परस्परोपाधित्ववारणाय विशेष्यदलम् ४ साध्यव्यापकत्वे सति साधनाव्यापकत्वम् ॥८४२॥

**उपाध्यायः**-एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः, योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते इति भविष्ये ॥८४२॥

**उपायः**-उपक्रमः १ प्रतिकारपथः * २ साक्षात्परम्परया वा यत्किञ्चित्कार्यजनने समर्थः ३ उपायतेऽर्थोऽनेनेति ॥८४७॥

**उपार्जनं**-स्वत्वसम्पादको व्यापारः । [षणदानं

**उपालम्भः**-निन्दापूर्वक(दुष्टवचनम् १)तिरस्कारः २ परपक्षदू-

**उपासना**-मुक्तिप्रयोजिका विद्या * १ निकृष्टेषूत्कृष्टबुद्धिः २ वस्तुस्वरूपानपेक्षः पुरुषेच्छामात्रतन्त्रो मानसप्रवाह इति ग्रं०

**उपासनाकाण्डं**-उपासनातदितिकर्तव्यताबोधकप्रकरणम् १ मन्त्रोदितार्थस्येतिकर्तव्यताबोधककाण्डमिति ग्रं० ॥ ८५७ ॥

**उपेक्षा**-संस्काराजनिका बुद्धिः १ पापेषु सत्कारतिरस्कारयोरौदासीन्यम् * २स्वत्वध्वंसमात्रजनकस्त्यागः ३परस्वत्वानभिसंधानपूर्वकस्वत्वप्रागभावसमानकालीनस्वत्वाविषयकेच्छेति ग्रं०

**उपोद्घातः**-निर्दिष्टोपसाधकः १ प्रकृत (शास्त्रे प्रतिपाद्योपयोगिविचारः २ )ार्थसिद्ध्यनुकूलचिन्ताविषय इति ग्रं० ३ प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य प्रागेव तदर्थमर्थान्तरवर्णनम् । प्रतिज्ञातवर्णनवारणायार्थान्तरेति, असंबद्धार्थवर्णनव्यावृत्त्यर्थं **तदर्थ**मिति, अग्निमानयमिति प्रतिज्ञाय धूमवत्त्वादित्यर्थान्तरवर्णनं व्यावर्तयितुं **प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य**ेत्युक्तम्, तावत्युक्ते बुद्धौ सङ्गृह्य पश्चात्प्रतिज्ञाय यद्वर्णनं तस्योपोद्घातत्वनिरासाय

प्रागेवेति ४ स्थानं निमित्तं वक्ता च श्रोता श्रोतृप्रयोजनम्, संबन्धाद्यभिधानञ्च उपोद्घातः स उच्यते ॥८६३॥

**उभयत्वं**—द्वित्वविशिष्टत्वम् * १ अपेक्षाबुद्धिविशेषविषयत्वम्।

**उभयकर्मजसंयोगः**-स्वजनकक्रियाऽभाववदसमवेतसंयोग.।

**उल्लापः**—काकुवाक्यम् १ शोकरोगादिना ध्वनिविकार इति मं०

**उल्लेखः- / उल्लेखनं** उत्कीर्तनम् १ इदं कर्तव्यमित्यादिना सङ्कल्पितार्थप्रतिपादकशब्दोच्चारणम् * २ एकस्यापि निमित्तवशादनेकधा ग्रहणम् ३ सङ्कल्पितार्थकवाक्योच्चारणम् ८७२

**ऊहः**-प्राकृतप्रयोगस्यान्यथा भावः १ पदान्त(रप्रक्षेपः२)रेणाकाङ्क्षापूरणार्थाध्याहारः * ३ शिष्येणानुक्तस्याप्यूहनम् ४ उपदेशसमसमयं शिष्यप्रतिपत्त्यनुकूलापूर्वयुक्तिकल्पनं वा ५ संशयपूर्वपक्षनिराकरणपूर्वकोत्तरपक्षव्यवस्थापनम् ६ अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्वकमन्वययोग्यविभक्त्यादिकल्पनम्, यथा पार्वणे **सौम्यास** इति बहुवचनमन्वितमप्येकोद्दिष्टेऽनन्वितत्वात्सौम्य इत्येकवचनान्ततया कल्पनम् ॥ ८८९ ॥



**ऋङ्मन्त्रः**-नियताक्षरपादावसानो मन्त्रः१पादबद्धगायत्र्यादिच्छन्दोविशिष्ट[१०४७२]मन्त्र इति पं० २ यत्रार्थवशेन पादव्यव-

**ऋक्संहिता**-अग्निमीळे इत्यादिकऋक्समुदायः [स्थितिर्मन्त्रः

**ऋग्वेदः**-ऋग्बहुलो वेदः १ ऋगवयवको वेदः २ ऋग(विनियोज-

कत्वमृग्वेदत्वम् ३ ) द्रव्यको वेद इति न्यायसुधायाम् ॥८८६॥

**ऋजुत्वं**-वक्रत्वाभाववत्त्वम् । [पुनरर्पणबुद्ध्या गृहीतं

**ऋणं**-अवश्यं(शोध्यम् १)देयम् २ अन्यस्वामिकं द्रव्यं नियतकाले

**ऋतम्भराप्रज्ञा**-त्रैकालिकविषयावगाहिनी बुद्धिः ॥ ८९२ ॥

**ऋषित्वं**-शास्त्रप्रणेतृत्वम् १ मन्त्रद्रष्टृत्वम्, यथा वसिष्ठवामदेवादयः २ अतीन्द्रियार्थदर्शित्वम् ३ ज्ञानसंसारपारगामित्वमिति ग्रं०



**एकत्वं**-प्रथमसङ्ख्यान्वितत्वम् १ द्वित्वाद्यभाववत्त्वम् ॐ २ सजातीय(निष्ठभेदाप्रतियोगित्वम् ३)विजातीयस्वगतभेदशून्यत्वम् ।

**एकदेशी**-सिद्धान्तैकदेशाश्रायकत्वे सति स्वतन्त्राधिकार्थनिरूपकः

**एकपदत्वं**-एकार्थविषयकशक्तिनिरूपकत्वम्, यथा रामः ९०२

**एकभविकत्वं**-एकजन्म ( नि फल ) जनकत्वम् ॥ ९०३ ॥

**एकवाक्यत्वं**-अविसंवादिवाक्यत्वम् * १ विशिष्टैकार्थप्रतिपादकत्वम् २ एकार्थबोधक(त्वम् ३)ानां शब्दानां मिथ आकाङ्क्षयैकस्यां बुद्धावारूढत्वमिति ग्रं० ४ निरूप्यनिरूप ( उपजीव्योपजीव ) कभावापन्नबोधविषयताप्रयोजकत्वम् ५ विशेषणविशेष्यावगाहिबोधजनकत्वम् * ६ भिन्नप्रतीतिविषयानेकमुख्यविशेष्यरहित ( त्वे सति विभज्यमानसाकाङ्क्षत्वम् ७ ) त्वसमानाधिकरणान्वीयमानपदार्थान्वयाभावप्रयुक्ताकाङ्क्षानिवृत्तिशून्यत्वम् ।

**एकाग्रभूमिः**-एकविषयकधारावाहिकवृत्तिसमर्थरूपा दशा ।

**एकार्थीभावः**-अपृथगुपस्थितिविषयः १ विशेषणविशेष्यभावा-वगाहित्वे परस्परान्वितत्वे वा सत्येकार्थोपस्थितिजनकत्वम् ।
**एकेन्द्रियवैराग्यं**-पक्वसर्वकषायज्ञानेन चित्तोत्सुकता १ इन्द्रि-यान्तरेषूपसंहृतेष्वप्यनुपसंहृतस्य मनसो वृत्तिजिहासेति ग्रं०
**ऐकान्तिकत्वम्**-साधनानन्तरमवश्यं भावित्वम् ॥ ९१८ ॥
**ऐतिह्यप्रमाणम्**-विशिष्यानिर्णीतप्रथमवक्तृकः शब्दविशेषः, यथात्र वटे यक्षः १ अनिर्दिष्टवक्तृकं प्रवादपारम्पर्यम् ॥९२०॥
**ऐश्वर्यं**-इच्छानभिघातात्मकम् ॐ १ शासनकर्तृत्वम् ॥९२२॥
**औत्सुक्यं**-रमणीयफलसाधनेनोत्कटेच्छा१ विषये रमणीयत्वबु-द्ध्या जायमानो० २ कार्याकार्याविचारेण प्रवृत्तिहेतुराह्लादविशेषः

## क

**कथा**-इतिवृत्तवर्णनपरः प्रबन्धविशेषःॐ१नानाकर्तृकपूर्वोत्तरपक्ष-प्रतिपादकवाक्यविस्तरः२तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यो न्यायानुगतवचनसंदर्भः । लौकिकविवादवारणाय न्यायेत्यादि
**कनिष्ठं**-अल्पतर(तरणिस्पन्दसंबन्धवान् १)स्पन्दान्तरितजन्यं
**कन्था**-सूत्रग्रथितो जीर्णो वस्त्रखण्डः१ तिर्यक्स्यूतबहुवस्त्रखण्ड-समूह इति ग्रं० २त्यक्तं वस्त्रं गृहस्थेन बहिःप्रक्षाल्य यत्नतः, सहस्रं डोरिकां दद्यात् कन्था सेत्यभिधीयते ॥ ९३१ ॥
**कन्या**-योन्यादिलज्जिताङ्गागुह्यकत्वे सति पांशुक्रीडावती ९३२
**करणं**-साधकतमम् १ क्रियानिष्पादकम् ॐ २ व्यापारवदसाधारण-

कारणम्, यथा छिदिक्रियां प्रति कुठारः। कालादिवारणायासाधारणेति, व्यापारेऽतिव्याप्तिवारणाय व्यापारवदिति ३ फलायोगव्यवच्छिन्नकारणम्। [ननुकूलत्वं

**करणापाटवं**-स्वस्वकार्यासामर्थ्यम् १ इच्छाविषयीभूतवर्णाद्य-

**करुणा**-दुःखिषु दुःखप्रहाणार्थं दया १ परदुःखप्रहाणेच्छा वा।

**कर्तव्यं**-कर्तु(मुचितम्१)योग्यम्*२अवश्यं करणीयम् ॥९४१॥

**कर्ता**-क्रिया(यां स्वतन्त्रः१)नुकूल(कृत्याश्रयः२)ज्ञानशक्तिसंपन्नः ३ उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् ४ इतरकारकाप्रयोज्यत्वे सति सकलकारक(प्रेरकत्वम्५).प्रयोक्तृत्वम्। कुठारादिकारकप्रयोक्तरि हस्तादावतिव्याप्तिवारणाय सत्यन्तं

**कर्म**-शुभाशुभ(ादृष्टजनको व्यापारः १)क्रियाजन्यमदृष्टम्* २ करणव्यापारविषयः,यथा वास्यादिकरणव्यापारस्योद्यमननिपातनादेर्विषयः काष्ठादिः ३ धात्वर्थतावच्छेदकपरसमवेतक्रियाफलशालित्वम् ४ संयोग(विभागयोरनपेक्षकारकम्५) भिन्नत्वे सति संयोगासमवायिकारणम्। संयोगवारणाय सत्यन्तम्, घटादिवारणाय विशेष्यदलम्। [र्थस्मारकं काण्डं

**कर्मकाण्डं**-कर्मणां कर्त्तव्यताप्रतिपादकं काण्डम्१द्रव्यदेवताद्य-

**कर्मधारयसमासः**-तुल्यविभक्तिलिङ्गयोरुभयोः पदयोः समानाधिकरणः समासः, यथा कृष्णमृगः,श्वेतपताकेत्यादिः।

**कर्ममीमांसा**-कर्मविषयकःपूजितो विचारः१'पूर्वमीमांसा'लक्षण०

**कर्मेन्द्रियं**–वदनादिव्यापारकरणमिन्द्रियम् १ अपञ्चीकृतपञ्च-महाभूतकार्यत्वे सति वेदनादिक्रियासाधनत्वं कर्मेन्द्रियत्वम् ।

**कर्षणं**–देशान्तरसंयोगानुकूलव्यापारानुकूलव्यापारः ॥९५९॥

**कलियुगं**–कलिरेव युगम् १ निर्बीजा पृथिवी निरोषधिरसा नीचा महत्त्वं गताः, भूपाला निजधर्म-कर्मरहिताः विप्राः कुमार्गे गताः। भार्या-भर्तृविरोधिनी पररता पुत्राः पितुर्दूषकाः, हा कष्टं खलुवर्तते कलियुगे धन्या मृता ये नराः ॥ ९६० ॥

**कल्पः**–ब्रह्मणो दिवसः * १ मन्त्रार्थसामर्थ्यप्रकाशको ग्रन्थः २ यज्ञपात्रनिर्माणप्रकारप्रतिपादकं शास्त्रम् ३ यागप्रयोगप्रतिपा०

**कल्पना**–अप्रकृतविषयोद्भावनम् १ नूतनविषयोद्भावनं वा ।

**कषायः**–चित्तस्य रागादिना स्तब्धीभावः ॥ ९६५ ॥

**काणत्वम्**–चक्षुरिन्द्रियशून्यैकगोलकवत्त्वम् ॥ ९६६ ॥

**कादाचित्कत्वं**–सत्त्वे सति किञ्चित्कालवृत्त्यभावप्रतियोगित्वं

**कामः**–काम्यते जनैरिति, यथा स्वर्गादिः १ फलेच्छा २ इष्टविष-याभिलाषः ३, अप्राप्तो विषयः प्राप्तिकारणाभावेपि प्राप्यतामि-त्याकारश्चित्तवृत्तिविशेषः * ४ सङ्गमेच्छा ५ विषयेन्द्रियजन्यं सुखं वा ६ स्त्रीपुंसव्यतिकरतृष्णा ७ दमश्च निःसङ्कल्पश्च कामं शिथिलीकरोति १ ब्रह्मचर्येण वस्तुविचारेणास्य निवृत्तिः ९७४

**काम्यत्वम्**–तत्तत्फलेच्छाधीनेच्छाविषयत्वम् ॥ ९७५ ॥

**काम्यकर्म**–स्वर्गादीष्टसाधनं कर्म, यथा ज्योतिष्टोमादि १ तत्त-

त्फलकामना (धीनकर्तव्यताकत्वम् २ ) वदधिकारिकर्तव्यम् ३
अनुष्ठाने फलविशेषजनकत्वे सत्यननुष्ठाने प्रत्यवायाजनकत्वम्
**कायः**-भोगायतनम् १ देहव्यापित्वगिन्द्रियम् २ 'शरीर'लक्षणम ०
**कायव्यूहः**-कर्मभोगार्थं योगिद्वारा युगपत्कल्पितः कायसमूहः
**कारकं**-व्यापारवत्कारणम् १ क्रियाजनक (म् २) शक्तिमत्त्वम् ।
**कारकविभक्तिः**-कारकत्वव्याप्यकर्मत्वादिशक्तिबोधिका विभक्तिः
**कारणत्वं**-उत्तरविशेषत्वम् *१ व्यभिचाराभावसहकृतसहचा-
रवत्त्वे सति पूर्वभावित्वम् २ अनन्यथासिद्धत्वे सति नियतपूर्ववृ-
त्तित्वम् । दण्डत्वादिवारणाय **सत्यन्तम्** , अनियतरासभादि-
वारणाय **नियते**ति, कार्यवारणाय **पूर्वे**ति ३ कार्याव्यवहितप्रा-
क्क्षणावच्छेदकत्वे सति कार्यसमानाधिकरणात्यन्ताभावाप्रति-
**कारिका**-अल्पाक्षरत्वे सति बह्वर्थज्ञापकः श्लोकः । [योगित्वं
**कार्यत्वं**-आद्यक्षणसंबन्धित्वम् १ प्रागभावप्रतियोगित्वम् । का-
लादिवारणाय **प्रागि**ति, असंभववारणाय **प्रतियोगी**ति नै० २
वर्तमानावस्थोपपादनत्वमिति योगिनः ३ नियतपश्चाद्भावित्वम् ४
कालत्रयानन्वितत्वे सति प्रवृत्त्यभावविरोधित्वं वा ५ कारणत्वा-
भिमतवस्त्वभिन्नत्वमिति वे० ६ कृतिसाध्यत्वे सति कृत्युद्देश्य-
त्वम् ९ ॰ति (संसृष्टत्वम् ८) योग्यत्वे सत्यलौकिकत्वमिति मी०
**कार्याध्या॰** -कारणत्रयजन्योध्यासः १ दोषसंप्रयोगसंस्कारज-
**कार्याविद्या**-'तू॰ ॰ध्या'वदस्य लक्षणमनुसंधेयम् । [न्यत्वं

**कालः**-अतीतादिव्यवहारासाधारणं कारणम् १ विभुत्वे सति दिगसमवेतपरत्वासमवायिकारणाधिकरणम् । [प्रतियोगित्वं

**कालिकपरिच्छेदः**-यत्किञ्चित्कालावृत्तित्वम् १ ध्वंसप्रागभाव-

**काव्यं**-रसात्मकवाक्यम् १ रमणीयार्थप्रतिपादकः शब्द इति ग्रं० २ आनन्दविशेष (साधनत्वम् ३) जनकत्वं काव्यत्वम् ४ व्याकरणादिदोषरहितत्वे सत्यर्थदोषशून्यत्वम् ॥ १०१२ ॥

**काष्ठमौनं**-इङ्गितेनापि स्वाभिप्रायाप्रकाशनम् १ काष्ठमिव मौनं

**किन्तु**-प्रागुक्तविरुद्धार्थः १ पूर्ववाक्यसङ्कोचज्ञापनमिति ग्रं०

**कीर्तनं**-यशःप्रकाशः *१ भगवन्नाम्नां वैखर्योच्चारणम् १०१८

**कुतर्कः**-श्रुतिविरोधितर्कः । [षष्टिमात्राभिरायमनं

**कुम्भकप्राणायामः**-अन्तःस्तम्भवृत्तिः १ पीतस्य वायोश्चतुः-

**कुलत्वं**-वंशीयत्वम् १ सजातीयसमूहत्वमिति ग्रं०॥१०२२॥

**कूटस्थः**-विषयसंनिधावपि विकारशून्यः ॥ १०२३ ॥

**कृतघ्नत्वम्**-कृतोपकारस्यापकारकत्वम् ॥ १०२४ ॥

**कृतज्ञत्वम्**-कृतोपकारकज्ञातृत्वम् ॥ १०२५ ॥

**कृतनाशः**-कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः॥१०२६॥

**कृतोपास्त्यधिकारी**-उपास्यसाक्षात्कारपर्यन्तोपासनाकारी ।

**कृपणता**-उचितव्ययाकरणेनापि धनरक्षणेच्छा ॥ १०२८॥

**कृपा**-स्वार्थमनपेक्ष्य परदुःखप्रहरणेच्छा । [हीनं

**केवलं**-एकमात्रम् १ पदान्तरशून्यं वा २ पदार्थान्तरसंसर्गवि-

**केवललक्षणा**–शक्यसाक्षात्सम्बन्धः ॥ १०३४ ॥

**केवलव्यतिरेकित्वं**·अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वम् । [गितानवच्छेदकधर्मवत्त्वं

**केवलान्वयित्वं**-अत्यन्ताभा (वाप्रतियोगित्वम्१) वीयप्रतियो-

**कैवल्यं**-सजातीयद्वितीयरहितत्वम्१'मोक्ष'लक्षणमप्यत्र पठनीयं

**कोटित्वं**-कोटिसङ्ख्याविशिष्टत्वम्१संशयजनकज्ञानीयप्रकारतावत्त्वं

**कोशः**–असिकोशवदात्माच्छादकः * १ शब्दपर्यायप्रकाशको ग्रन्थः२शब्दार्थ(प्रतिपादकत्वम्३)निर्वचनपरिज्ञापकत्वं कोशत्वं

**कौतूहलत्वं**–विस्मयविशिष्टजिज्ञासाविशेषत्वम् ॥ १०४६ ॥

**कौपीनम्**–पुरुषलिङ्गावारको वस्त्रखण्डः १ कुत्सितस्य पीनस्य मांसस्यावरणम् २ एकहस्तप्रविस्तारं करद्वन्द्वसमायतम्, त्रिलम्बिततृतीयांशं गुह्याच्छादनमीरितम् ॥ १०४९ ॥

**क्रमः**-सामर्थ्यहेतुकव्यापारः*१परिपाट्या यथोचितसन्निवेशः२ चिन्त्यमानार्थसंप्राप्तिरिति ग्रं० ३ पूर्वापरावस्थानत्वं क्रमत्वम्

**क्रमसमुच्चयः**–एकेन कर्त्रा ज्ञानकर्मणोः क्रमेणानुष्ठानम् ।

**क्रिया**-करणव्यापारनिष्पाद्या * १ संयोगविभागयोरसाधारणो हेतुः २ क्रियान्तराकाङ्क्षानुत्थापकत्वं क्रियात्वम् ॥ १०५६ ॥

**क्रीडा**-हर्षजनकहस्तादिविक्षेपः*१बाह्यसाधनसापेक्षा १०५८

**क्रोधः**-अनिष्टविषय ( दर्शनादिहेतुको मनोविकारः १ ) द्वेषहेतुकः २ कामितार्थविघातजन्यो बुद्धिक्षोभ इति ग्रं० ३

दययाऽहिंसया क्षमया वा क्रोधस्य निवृत्तिः ॥ १०६० ॥

**क्लेशः**-अविद्याद्यन्यतमः * १ बाधनालक्षणः ॥ १०६२ ॥

**क्षणः**-व्यापारशून्यावस्थितिः १ स्वाधेयपदार्थप्रागभावानाधारः समय इति ग्रं० २ निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः

**क्षणिकत्वं**-स्वाधिकरणसमयप्रागभावाधिकरणक्षणा(नुत्पत्तिकत्वे सति कादाचित्कत्वम् १) वृत्तित्वम् २ तृतीयक्षणवृ(त्त्यवृत्तिजातिमद्विशेषगुणत्वम् ३) त्तिध्वंसप्रतियोगित्वम्। घटादिवारणाय वृत्त्यन्तम् ४ क्षणान्तरासंबन्धित्वे सति क्षणसंबन्धित्वम्

**क्षमा**-आकृष्टस्य ताडितस्य वाऽविकृतचित्तता १ सत्यपि सामर्थ्ये परिभवहेतुं प्रति क्रोधस्यानुत्पत्तिर्वा २ <u>आक्रुष्टोऽभिहतो यस्तु नाक्रोशेन्न हनेदपि, अदुष्टैर्वाङ्मनःकायैस्तितिक्षुश्च क्षमा स्मृता।</u>

**क्षयतापः**-पुण्यकर्मक्षये पतनभीतिजन्यस्तापः ॥ १०७४ ॥

**क्षेपकः**-विक्षेपकर्तरि ग्रन्थकृदकृतांशस्य तद्ग्रन्थमध्ये संनिवेशकः

**क्षेमः**-स्थितरक्षणम् १ लब्धप्रतिपालनमिति ग्रं० ॥ १०७७ ॥

**क्षोभः**-चित्तचाञ्चल्यम् १ इच्छाविघाताच्चित्तपरितापो वा १०७९



**खञ्जत्वं**-पादविकलत्वम् १ संस्थानविशेषशून्यपादवत्त्वम् १०८०

**खण्डनं**-नाशानुकूलव्यापारः १ स्वमतदोषपरिहारपूर्वकपरमतपदार्थनिराकरणम् ** २ शब्दार्थानिर्वचनीयताप्रतिपादको ग्रन्थः

**खण्डप्रलयः**-जन्यद्रव्यानधिकरणकालः १ नैमित्तिकप्रलयलक्ष०

खानपानम्-कठिनद्रवद्रव्ययोर्गलाधःकरणम् ॥ १०८४ ॥
खिलकाण्डम्-नानाजातीयप्रत्ययोदाहरणबोधकं काण्डम् १
कर्मोपासनब्रह्मकाण्डावशिष्टार्थप्रकाशकत्वं खिलकाण्डत्वम् ।
खेदः-अवसादः * १ उपायाभावेष्टनाशादिकृतमनोभङ्गः ।
ख्यातिः-भ्रमज्ञानम् * १ महत्तत्वम् २ प्रसिद्धिर्वा १०९०

ग

गतिः-परिणामः * १ उत्तरदेशसंयोगानुकूलक्रिया ॥१०९२॥
गद्यं-छन्दोरहितवाक्यम् १ पादलक्षणशून्यपदसमूह इति ग्रं०
गन्धत्वं-घ्राणग्राह्यत्वम् १ पृथिवीवृत्तिमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं
गमकत्वं-नित्यसाकाङ्क्षत्वम् ।
गमनं-अनियतोत्तरदेशसंयोगासमवायिकारणं कर्म ॥११००॥
गम्भीरत्वं-निमित्ते सति हर्षभयकामाद्यभिव्यक्तिरहितत्वम् ।
गर्भितं-गर्भयुक्तम् १ वाक्यान्तरानुप्रवेशो गर्भितत्वम् ११०३
गर्वः-व्यभिचारिभावविशेषः *१ अभिमानात्मिका चित्तवृत्तिः ।
गाथा-सुभाषितत्वेन सर्वैर्गीयमाना ॥ ११०६ ॥
गानं-आभ्यन्तरयत्नजनितः स्वरविशेषाणामभिव्यञ्जकः शब्दः।
गीतं-छान्दस हार्दान्यतरस्वरेण गुणकीर्तनम् १ स्वरतालग्रामभेदरागरागाङ्गभूषितम् ,संस्कृतं वा प्राकृतं वा गीतं गीतविदो विदुः।

गुणः-प्रमाया असाधारणकारणम् *१ निर्गुणत्वे निष्क्रियत्वे वा सति सामान्यवत्त्वं गुणत्वम् २ द्रव्यकर्मभिन्नत्वे सति समवायेन

द्रव्यमात्राश्रितत्वम् ३ संयोगाजन्यसंयोगासमवायिकारणवृत्ति-संयोगासमानाधिकरणजातिमत्त्वमिति शिवादित्यमिश्राः १११३

**गुणवादः**-प्रमाणान्तरवि (रोधे सत्यर्थवादः १) रुद्धार्थ (प्रतिपादकत्वम् २) ज्ञापकः शब्दः, यथादित्यो यूप इत्यादिः १११६

**गुणोपसंस्कारः**-भिन्नशाखागतानां गुणानामङ्गानां विशेषणानां वा एकबुद्ध्युपारोहणम् ॥ १११७ ॥

**गुरुः**-दीर्घस्वरवद्वर्णः ॐ १ हितोपदेष्टा २ संशयापनोदको वा ३ सविध्युपनयनपूर्वकवेदाध्यापनकर्ता ४ गुशब्दस्त्वन्धकारः स्याद्रुशब्दस्तन्निरोधकः, अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ।

**गुरुत्वं**-आद्यपतनासमवायिकारणम् । दण्डादिवारणायासमवायीति, रूपादिवारणाय पतनेति, वेगेऽतिव्याप्तिवारणायाद्येति

**गृहस्थः**-वैवाहिकेन विधिना कृतपत्नीपरिग्रहः ॥ ११२४ ॥

**गोचरः**-भूचरः ॐ १ ज्ञाननिरूपितो विषयः ॥ ११२६ ॥

**गोत्रं**-पुत्रपौत्रप्रभृतिकमपत्यम् १ संभावनीयबोधत्वं गोत्रत्वम् ।

**गौणः**- / **गौणार्थः** } गुणादागतः १ वास्तविकारोपितान्यतरगुणसत्ताप्रयोज्यारोपविषय इति ग्रं० २ स्वार्थमुत्सृज्यपरार्थावलम्बनम् ३ तद्धर्मप्रकारकप्रतीतिविशेष्याप्रसिद्धार्थः ॥११३०॥

**गौणप्रयोजनत्वं**-मुख्यप्रयोजनेच्छाधीनेच्छाविषयत्वम् ११३३

**गौणीवृत्तिः**-गुणमधिकृत्य प्रवृत्ता वृत्तिः १ लक्ष्यमाणगुणयोगेन स्वार्थादन्यत्र वृत्तिः, यथा सिंहो माणवकः ॥११३५॥

**ग्रन्थः**-अलौकिकैकप्रयोजनोद्देशेन प्रवृत्तवाक्यसमुदायः११३६

**ग्रहणं**-उपदिष्टार्थस्य सद्योवधारणसामर्थ्यम् १ शिष्यकृतप्रश्नाक्षेपवाक्यार्थानां सद्योवधारणसामर्थ्यमिति ग्रं० ॥११३७॥

**ग्रामः**-लोकालयः १ हट्टादिशून्यवसतिरिति **श्रीधरः** २ विप्रादिवर्णप्राया प्राकारपरिखादिरहिता बहुजनवसतिः ॥११४०॥

**ग्राह्यम्**-अङ्गीकार्यम् * १ लौकिकप्रत्यक्षस्वरूपयोग्यम् ११४२

**ग्लानिः**-अनुत्साहः १ दोषदर्शनजन्याप्रवृत्तिर्वा ॥११४४॥

**घटत्वं**-स्वाश्रयघटभिन्नाधिकरणावृत्तिर्जातिः। [रूपक)त्वत्वं

**घटकत्वं**-स्वविशिष्टत्वम् १ त(प्रत्येक)द्विषयताव्यापकविषयता(नि

**घटितत्वं**-समुदायविषयताव्याप्यविषयतानिरूपकत्वम् ११४८

**घ्राणेन्द्रियं**-गन्ध(ग्राहकत्वं घ्राणत्वम् १)ोपलब्धिसाधनमिन्द्रियम्। चक्षुरादावतिव्याप्तिवारणाय **गन्धे**ति, कालादिवारणा-[येन्द्रियमिति

## च.

**चक्रकम्**
**चक्रिका**- } स्वापेक्षणीयापेक्षितसापेक्षत्वनिबन्धनप्रसङ्गः १ पूर्वस्य पूर्वापेक्षितमध्यमापेक्षितोत्तरापेक्षितत्वम्।

**चक्षुरिन्द्रियं**-रूप(ग्राहकत्वं चक्षुष्ट्वम् १)ोपलब्धिसाधनमिन्द्रियं

**चतुरशीतिभ्रमणं**-उच्चावचमध्यदेहप्रभेदग्रहणम्॥११५६॥

**चतुर्थीत्वं**-ददात्यर्थधर्मिकसंप्रदानत्वानुभावकसुप्सजातीयत्वम्

**चरमत्वं**-स्वसजातीयपदार्थप्रागभावानधिकरणकालवृत्तित्वम्।

**चमसः**-चतुरस्राकारस्समुष्टिकः प्रादेशमात्रो दारवः पात्रविशेषः

**चान्द्रायणं**-एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत्,
इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः ॥ ११६० ॥
**चारित्रम्**-पापात्मकक्रियारम्भमात्रत्याग इति बौद्धाः ११६१
**चार्वाकः**-तार्किकविशेषः १ बृहस्पतिशिष्यत्वे सति देहात्मवादी
**चिकित्सा**-व्याधिनिवारणो व्यापारः ॥ ११६४ ॥
**चिकीर्षा**-सम्पादनेच्छा १ प्रवृत्तिहेतुरिच्छेति ग्रं० ॥११६६॥
**चित्तम्**-अनुसन्धानात्मकवृत्तिमदन्तःकरणम् ॥ ११६७ ॥
**चित्त्वं**-अलुप्तप्रकाशत्वम् १ समस्तवस्त्ववभासकत्वमिति ग्रं०
**चिदाभासः**-चित्प्रतिबिम्बः १ चिल्लक्षणरहितत्वे सति चिद्वद्भा-
**चिन्तनं**-उपदिष्टार्थानुसन्धानम् । [समानः
**चिन्ता**-इष्टाप्राप्त्यनिष्टप्राप्तिहेतुको भूलेखनाधोमुखत्वादिकरो
मानसो विकारविशेषः ॥ ११७३ ॥
**चेष्टा**-उद्योगः १ हिताहितप्राप्तिपरिहारा(नुकूला क्रिया २)र्था
क्रिया *३ सङ्केतबलेन स्वाभिप्रायप्रकाशनमिति नर्तकाः ११७७
**छन्दः**-लौकिकवैदिकशब्दांश्छन्दयति नियमयति प्रतिपादयति
विरामादिव्यवस्थापको ग्रन्थः १ छन्दोबद्धवाक्यम् २ निय-
मितवर्णमात्रानिबद्धचतुष्पादादिपद्यमिति ग्रं० ॥ ११८० ॥
**छलं**-शब्दवृत्तिव्यत्ययेनेतरार्थकल्पनम् १ वक्तृतात्पर्याविषयार्थ-
कल्पनेन दूषणाभिधानम्, यथा नवकम्बलोयं देवदत्तः ।
**छेदनं**-आरम्भकसंयोगविरोधिविभागा(नुकूलक्रिया)वच्छिन्नक्रिया



**जटः**—अपरिच्छिन्नासभ्यवदनपर इति मैत्र्युपनिषट्टीकायाम्

**जडः**-स्वतःप्रत्ययाभाववान्*१इष्टानिष्टानभिज्ञः२वेदग्रहणास-

**जनकत्वं**-अनन्यथासिद्धत्वे सति नियतपूर्ववृत्तित्वम्। [मर्थः

**जन्म**-आद्यशरीरप्राणसंयोगः १ स्वादृष्टोपनिबद्धशरीरग्रहणमिति ग्रं० २ शरीरवियोगक्षणमारभ्य.पुनः सुखाद्युपलब्धिपूर्वक्षणपर्य-

**जयः**-उत्कर्षलाभः१शत्रुपराङ्मुखीकरणम्। [न्तमवस्थितिः

**जल्पः**—प्रलापः *१ परपक्षनिराकरणपूर्वकस्वपक्षस्थापनावती विजिगीषुकथा। [गत्यागलक्षणा'लक्षणमप्यत्र०

**जहदजहल्लक्षणा**-एकदेशपरित्यागे सत्येकदेशपरिग्रहरूपा'भा-

**जहल्लक्षणा**—शक्यमात्रपरित्यागेन तत्संबन्ध्यर्थान्तरे वृत्तिः, यथा गङ्गायां घोष इति गङ्गापदस्य तीरे १ लक्ष्यतावच्छे-दकरूपेण लक्ष्यमात्रबोधप्रयोजिका लक्षणा ॥ ११९८ ॥

**जाग्रज्जाग्रत्त्वम्**—प्रमाज्ञानत्वम् ॥ १२०० ॥

**जाग्रत्सुषुप्तिः**—जाग्रदवस्थायां श्रमादिना स्तब्धीभावः१२०१

**जाग्रत्स्वप्नः**—शुक्तिरजतादिभ्रमः ॥ १२०२ ॥

**जाग्रदवस्था**-इन्द्रियजन्यान्तःकरणवृत्त्यवस्था१दिगाद्यधिष्ठा-तृदेवतानुगृहीतैरिन्द्रियैः शब्दादिविषयानुभवास्था। सुषुप्ता-वतिव्याप्तिवारणाय **शब्दादी**ति, स्वप्नवारणाय **दिगादी**ति।

**जातिः**-समानज्ञानजननी *१ भिन्नेष्वभिन्नाभिधानप्रत्ययनिमि-

त्तमिति वै० २ अनुगत्तबुद्धिव्यवहारहेतुभूतापरसामान्यम् ३ मन-स्त्वात्मत्वातिरिक्तनित्यमात्रसमवेतान्यत्वे सति समवेतसत्तानाश्रयः ४ अनिर्वचनीयबहुपदार्थघटितधर्मान्यतरधर्मरूपोपाधिभिन्नत्वे सति नित्यत्वे सत्यनेकव्यक्तिवृत्तिधर्मः। घटादौ व्यभिचारनिरासाय **नित्यत्वे सती**ति, अखण्डोपाधिरूपाभावत्वादावतिप्रसङ्गवारणायो**पाधिभिन्नत्वे सती**ति, जलपरमाणुरूपादौ व्यभिचारनिवृत्तयेऽ**नेकव्यक्तिवृत्तित्व**मिति।

**जात्युत्तरं**–असदुत्तरम् १ स्वप्रतिबन्धकमुत्तरमिति ग्रं० २ छलादिभिन्नदूषणासमर्थमुत्तरम् ॥ १२१२ ॥

**जारत्वम्**–पराङ्गनाविषयकास्फुटानुरागवत्त्वम् ॥ १२१३ ॥

**जिज्ञासा**–ज्ञातुमिच्छा १ अज्ञातादिबुद्धिसिद्धये प्रवर्तिकेच्छा।

**जिज्ञासुः**–ज्ञातुमिच्छुः १ आत्मज्ञानार्थिमुमुक्षुर्वा ॥१२१७॥

**जितेन्द्रियः**–श्रुत्वा स्पृष्ट्वाथ दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः, न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः १२१८

**जीवः**–ज्ञानदर्शनादिमानिति जैनाः १ सुखादिसमवायिकारणमिति नै० २ प्राणधारणा (श्रयः ३) नुकूलव्यापाराश्रयः ४ इन्द्रियविशिष्टशरीरवानिति ग्रं० ५ अविद्योपहितं चैतन्यम् ६ अविद्या (वच्छिन्नं चैतन्यम् ७) प्रतिबिम्बितं चैतन्यम् ॐ ८ यद्वा, अन्तःकरणा (भासश्चेतनः ९) वच्छिन्नं चैतन्यम् १० अन्तःकरणप्रतिबिम्बितचैतन्यं वा ११ चैतन्यमित्येकजीववादे।

**जीवनं**-प्राणधारण (म् १) ानुकूलव्यापारः २जीव्यतेऽनेनेति।

**जीवनचरितं**-जीवनवृत्तान्तयुक्तो ग्रन्थः ॥ १२३२ ॥

**जीवन्मुक्तः**-स्वतः परतश्च व्युत्थानाव्युत्थानरूपपञ्चमीषष्ठ्यादि-भूमिकायुक्तः १ प्रारब्धकर्मनिवृत्तिपर्यन्तं (बाधितचित्तादिमत्त्वम् २ )सुषुप्तिवद्व्यवहर्ता ३ जीवदवस्थायी (त्यक्तसंसारः ४) हर्षशोकादिरहितत्वे सति स्वस्वरूपज्ञानवत्त्वं जीवन्मुक्तत्वम्।

**जीवन्मुक्तिः**-श्रवणादिभिरुत्पन्नसाक्षात्कारस्य विद्वत्संन्यासिनः कर्तृत्वाद्यखिलबन्धप्रतिभासनिवृत्तिः १ स्वस्मिन्स्वदृशा सतताध्यासाप्रतिभासे सति यावत्प्रारब्धं स्वचित्ताद्यवस्थितिः। अज्ञसमाधौ लोकदृष्ट्याऽध्यासाप्रतिभासे सत्येव चित्ताद्यवस्थितिरस्तीति तत्रातिव्याप्तिवारणाय **स्वस्मिन्स्वदृशे**ति, तत्त्वज्ञानोत्तरक्षणिकवृत्त्यभावे व्यभिचारवारणाय **सततेति** पदम्, **स्वपदमादिपदं** च क्रमात्कस्यचिज्जीवन्मुक्तिसत्त्वे कस्मिँश्चिदज्ञे यावत्प्रारब्धं चित्ताद्यवस्थितिसत्त्वात्तत्रातिव्याप्तिस्तथा व्युत्थितस्थितप्रज्ञे चक्षुरादिसत्त्वात्तत्राव्याप्तिरिति तयोर्व्यावृत्त्यै।

**जीवसाक्षी**-अन्तःकरण(ोपलक्षितः १)तद्वृत्त्यन्यतरोपहितं चैतन्यं

**जीवाश्रयप्रमा**-अनधिगताबाधितविषयाकारान्तःकरणवृत्तिप्रतिबिम्बिता चित्। स्मृतावतिव्याप्तिवारणायान**धिगते**ति।

**ज्ञातत्वम्**-ज्ञानभास्यत्वम्। [क्षणमप्यत्रप०

**ज्ञातसत्ता**-ज्ञानसमकालीनविषयसत्ता १ 'प्रातिभासिकसत्ता' ल-

**ज्ञाता**-ज्ञानाश्रयः १ विषयचैतन्याभिव्यञ्जकान्तःकरणाज्ञानयोः परिणामात्मकवृ (त्त्याश्रयः १) त्त्युपहितं चैतन्यम् ॥१२४५॥

**ज्ञानं**-अर्थप्रकाशः १ आवरणभङ्गानुकूलो व्यापारः २ ज्ञायतेनेनेति करणव्युत्पत्त्या वृत्तिर्ज्ञानम् , ज्ञप्तिर्ज्ञानमिति भावव्युत्पत्त्या संविज्ज्ञानं

**ज्ञानगतप्रत्यक्षत्वं**-तत्तद्व्यवहारानुकूलचैतन्यस्य तत्तदर्थाभेदः १ स्वाविषयविषयकज्ञानाजन्यज्ञानत्वम्। विशेषणज्ञानजन्यविशिष्टज्ञानेऽव्याप्तिवारणाय **स्वाविषयविषयके**ति २ अपरोक्षार्थगोचर(त्वे सत्ययोग्यप्रमाणाजन्यत्वम् ३ )व्यवहारजनकत्वयो-

**ज्ञानदण्डत्वं**-अज्ञानतत्कार्यदमनहेतुत्वम्। [ग्यज्ञा नत्वं

**ज्ञानफलं**-वर्तमानलिङ्गदेहनिवृत्तिः १ भाविजन्मानारम्भो वा।

**ज्ञानलक्षणसन्निकर्षः**-स्वविषयविषयकप्रत्यक्षजनको ज्ञानवि-

**ज्ञानात्मा**-ज्ञातृत्वोपाध्यहङ्कारावच्छिन्नं चैतन्यम्। [शेषः

**ज्ञानाध्यासः**-अतस्मिँस्तद्बुद्धिः, यथा शुक्तौ रजतबुद्धिः १२६०

**ज्ञानेन्द्रियं**-ज्ञानकरणमिन्द्रियम् १ अपञ्चीकृतपञ्चमहाभूतकार्यत्वे सति शब्दाद्युपलब्धिसाधनत्वं ज्ञानेन्द्रियत्वम् ॥१२६२॥

**ज्ञापकः**-ज्ञानानुकूलशब्दः ॐ १ ज्ञानजन(कज्ञानविषयः २)कः।

**ज्ञापनम्**-ज्ञानानुकूलव्यापारः ॥ १२६६ ॥

**ज्ञेयत्वम्**-ज्ञानविषयत्वम् ॥ १२६७ ॥

**ज्ञेयचैतन्यं**-घटाद्यवच्छिन्नं चैतन्यम्१ 'प्रमेयचैतन्य' लक्षणमप्य०

**ज्येष्ठत्वम्**-बहुतरसूर्यस्पन्दान्तरितजन्यत्वम् ॥ १२६९ ॥

**ज्यौतिषं**—ज्योतिः अधिकृत्य कृतं शास्त्रम् १ सूर्यादिग्रहगत्यादिकप्रतिपादको ग्रन्थः * २ सूर्यादिज्योतिर्द्वारा कर्मानुष्ठानकालनिर्णयेष्टानिष्टफलप्रदर्शकम् ॥ १२७२ ॥

**टिप्पनी**-मूलटीकार्थबोधक्षमव्याख्यारूपा १ टेपतीति ॥१२७४॥

**टीका**-विषमपदव्याख्यारूपा १ 'व्याख्यान' लक्षणमप्यत्र पठनीयं



**तटस्थः**—वादिप्रतिवादिभावानापन्नः * १ तद्भिन्नत्वे सति तद्बोधकः

**तटस्थलक्षणत्वं**-कादाचित्कत्वे सति व्यावर्तकत्वम्, यथा देवदत्तस्य तिलकादिकम्। स्वरूपलक्षणेतिव्याप्तिवारणाय सत्यन्तम्, लक्ष्यावृत्तितादृशधर्मेऽतिव्याप्तिवारणाय **व्यावर्तकेति**।

**तत्पुरुषसमासः**-उत्तरपदार्थप्रधानः समासः १ समासप्रयुक्तलक्षणाशून्योत्तरनामपदकत्वे सति लुप्तद्वितीयादिविभक्तिकपूर्वनामपदकसमासः। पञ्चफलीत्यादिवारणाय **सत्यन्तम्**, नीलोत्पलादिवारणाय **लुप्तेत्यादि** २ तत्पुरुषपरिभाषाविषयत्वम्।

**तत्त्वज्ञानं**-यथार्थज्ञानम् * १ जीवब्रह्मणोरभेद(निश्चयः २)गोचराऽन्तःकरणवृत्तिः २ इदं सर्वं द्वैतजातमद्वितीये चिदानन्दात्मनि मायया कल्पितत्वा मृषैव आत्मैवैकः परमार्थसत्यः सच्चिदानन्दाद्वयोऽहमस्मीति ज्ञानम् ३ 'आत्मज्ञान' लक्षणमप्यत्र पठनीयं

**तत्त्वंपदार्थशोधनं**-यद्यद्व्यावृत्तं तत्तदनात्मा यदन्वयि तदात्मेति निश्चयः

**तथाहि**—उक्तार्थदृढीकरणम्।

**तदर्थः**-तस्यार्थः १ तदुपकारकः २ उपकार्योपकारकभावः ।

**तनुमानसज्ञानभूमिका**-निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यता । [णमप्यत्रप०

**तनुव्यसनं**-तनुपोषणे साभिनिवेशप्रवृत्तिः १'देहवासना' लक्ष-

**तन्त्रम्**-कार्यसाधकम् १ दृढप्रमाणम् * २ विस्ताराभावः ३ इतराधीनम् ४ स्वराष्ट्रचिन्ता वा ५ उभयार्थैकप्रयोगः ६ सकृदुच्चारितत्वे सत्यनेकार्थबोधकत्वं तन्त्रत्वम् ॥ १२९६ ॥

**तपः**-क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहनम् १ शास्त्रीयमार्गेण कायेन्द्रियशोषणम् * २ मनसश्चेन्द्रियाणाञ्चैकाग्र्यम् ३ अन्तर्मुखानि यदि खानि तपस्ततः किं ! नान्तर्मुखानि यदि खानि तपस्ततः किम्, अन्तर्बहिर्यदि हरिश्च तपस्ततः किं ! नान्तर्बहिर्यदि हरिश्च तपस्ततः किम् ॥ १२९७ ॥

**तमः**-तेजोऽभावः १ स्पर्शरहितत्वे सति रूपवत्त्वं तमस्त्वम् । पृथिव्यादिवारणाय सत्यन्तम्, आकाशादिवारणाय रूपवदिति ।

**तमोगुणत्वं**-गुरुत्वे सत्यावरकत्वे सति मोहकत्वम् ॥१३००॥

**तर्कः**-अनिष्टापादनम् १ प्रसञ्जकः २ व्याप्यारोपेण व्यापकारोपः, यथा यदि पर्वते वह्निर्न स्यात्तर्हि धूमोऽपि न स्यात् ३ युक्त्याऽर्थनिर्णयः ४ व्यभिचारादिशङ्कानिवर्तकः ॥१३०५॥

**तात्पर्यं**-वक्तुरिच्छा १ प्रकरणोचितप्रतीतिजननानुकूलवृत्तिमत्त्वं

**तात्पर्यानुपपत्तिः**-मुख्यार्थप्रत्यायने सति तात्पर्यस्यानुपपन्नत्वं

**तादात्म्यं**-भेदसहिष्णुरभेदः १ तद्भिन्नत्वे सति तद(भेदेन प्रतीयमानत्वम् २) भिन्नसत्ताकत्वम् ॥ १३११ ॥

**तापः**-प्रतिकूलवेदनीयः । [विपर्ययविशेषः

**तामिस्रः**-दुःखसाधने विद्यमानेपि किमपि दुःखं मे माभूदिति

**तारतम्यं**-न्यूनाधि(क्यम् १)भावः २ उत्कर्षापकर्षौ ॥ १३१६॥

**तितिक्षा**-शीतोष्णादिद्वन्द्वसहिष्णुता ॥ १३१७ ॥

**तिरोभावः**-व्यवहारायोग्यत्वम् ॥ १३१८ ॥

**तीर्थत्वं**-पुण्यजनकत्वम् १ तरणस्थानत्वं वा २ तीर्यतेति १३२१

**तीव्रतरवैराग्यं**-पुनरावृत्तिसहितं ब्रह्मलोकादिपर्यन्तं मास्त्विति स्थिरबुद्ध्या विषयजिहासा । [विषयजि०

**तीव्रवैराग्यं**-अस्मिञ्जन्मनि पुत्रदारादिमास्त्विवति स्थिरबुद्ध्या

**तुरीयावस्था**-ब्रह्मध्यानावस्थस्य पुनः पदार्थान्तरापरिस्फूर्तिः

**तुल्यत्वं**-स्वाभिन्नजातिसमनियतत्वम् १ एकाकारप्रतीतिजनकधर्मवत्त्वं वा २ 'सादृश्य'लक्षणमप्यत्र पठनीयम् ॥१३२७॥

**तुल्यबलविरोधः**-अन्यत्रान्यत्र लब्धावकाशयोर्द्वयोः शास्त्रयोरेकत्र युगपत्प्राप्तिः । [च्छत्वबुद्धिः

**तुष्टिः**-भोग्येष्वेतावताऽलमिति बुद्धिः १ अधिगतार्थादन्यत्र तु-

**तूलाऽविद्या**-उपाध्यवच्छिन्नचैतन्याच्छादिकाऽविद्या १३३१

**तृतीयात्वं**-प्रत्ययार्थधर्मिककरणत्वान्वयबोधानुकूलसुप्सजातीयत्वं

**तृप्तिः**-फलेच्छाविच्छेदः १ विषयविशेषसंपर्कजं सुखमिति ग्रं०

**तृष्णा**–प्राप्यमाणेष्वप्यर्थेष्वतृप्तिः १ यावदीप्सितद्रव्यप्राप्तौ सत्यामपि पुनस्ततोऽधिकद्रव्याकाङ्क्षेति ग्रं० ॥ १३३६ ॥

**तेजः**–उष्णस्पर्शवत् १ चन्द्रचामीकरसमवेतत्वे सति ज्वलनसमवेतसामान्यवान् * २ अप्रतिहताज्ञा ३ पराभिभवसामर्थ्यं वा ४ स्त्रीबालकादिभिर्मूढैरनभिभाव्यत्वम् ॥ १३४१ ॥

**तैजसजीवः**-स्वप्ने व्यष्टिसूक्ष्मशरीराभिमानिजीवः १ व्यष्टिसूक्ष्मकारणशरीरद्वयोपहितं चैतन्यम् । [मप्यत्रप०

**त्यागः**-स्वत्वध्वंसानुकूलव्यापारः १ विभागानु० २ 'दान' लक्षण-

**त्रसरेणुः**–द्व्यणुकत्रयात्मकरजः १ परमाणुषट्कसंबद्धरेणुर्वा ।

**त्राटकम्**-अश्रुसंपातपर्यन्तं सूक्ष्मलक्ष्यनिरीक्षणम् ॥ १३४८ ॥

**त्रिपुटी**-त्रयाणां पुटानां पदार्थानां ज्ञातृज्ञानज्ञेयरूपाणां समाहारः

**त्रिवृत्करणं**–त्रीणि भूतानि द्विधा विदार्य प्रतिभूतमेकैकमर्द्धं द्विधा प्रस्फोट्य इतरभूतद्वये योजनम् ॥ १३५० ॥

**त्रुटिः**–क्षणद्वयात्मककालः * १ अवयवादिहीनता ॥ १३५२ ॥

**त्वगिन्द्रियं**-स्पर्श(ग्राहकत्वं त्वक्त्वम् १) ोपलब्धिसाधनमिन्द्रियं

## द.

[वच्छिन्नत्वं

**दक्षिणत्वं**-शरीरावयववृत्तिजातिविशेषः * १ मेरुव्यवहितदेशा-

**दण्डः**–दुष्टनिग्रहः १ ग्रहण (ावच्छिन्नशासनम् २) पूर्वकशासनं

**दमः**–इन्द्रियसंयमः १ ब्रह्मज्ञानोपयोगिव्यापारातिरिक्तबाह्येन्द्रियव्यापारमात्रनिरोध इति विजयसारे २ बाह्यवृत्तिनिवर्तनम् ।

**दम्भः**-परविस्रम्भार्थं धर्माद्याचरणम् १ पूजाख्यातिलाभार्थं स्व-जपध्यानादिप्रसङ्गं विना प्रकटीकरणं वा २ वेषभाषाक्रियाचातुर्यादिभिः स्वमहत्त्व(ार्थं व्यर्थमाडम्बरः ३)प्रकटनम् ४ धर्मध्वजित्वं

**दया**-दुःखि( तेषु भूतेष्वनुकम्पा १ )नां प्रत्यनुजिघृक्षा १३६६

**दर्पः**-भर्त्सनादिहेतुभूतो मानसो विकारविशेषः १ धनस्वजन-विद्यादिनिमित्तश्चित्तस्योत्सेक इति प्रं० ॥ १३६९ ॥

**दर्शनं**-विचारप्रयोजक (ज्य) ज्ञानम् १ तत्त्वज्ञानसाधनशास्त्र-मिति प्रं० २ यथार्थतया ज्ञायते पदार्थोऽनेनेति ॥१३७२॥

**दानं**-स्वस्वत्वत्यागपूर्वकपरस्वत्वापादनम् १ 'त्याग'लक्षणमप्यत्र०

**दान्तः**-तपःक्लेशादिसहनकर्त्ता १ अन्तःकरण(सर्व)तृष्णातो निवृत्तः

**दार्ष्टान्तिकः**-दृष्टान्तविशिष्टः १ दृष्टान्तेन युक्तः ॥ १३७९ ॥

**दाहः**-भस्मीकरणम् *१ अत्यन्तानलसंयोगजन्यनाशः १३८१

**दिक्**-अकालत्वे सत्यविशेषगुणा महती १ प्राच्यादिव्यवहारासा-धारणहेतुः । आकाशादिवारणायासाधारणेति ॥१३८३॥

**दिनं**-सूर्यकिरणावच्छिन्नकालः १ सूर्योदया(दितदस्तमयपर्य)स्त-

**दीक्षा**-नियमः १ गुरुमुखात्स्वेष्टदेवमन्त्रग्रहणम् । [पर्यन्तसमयः

**दीर्घसूत्री**-चिरक्रियः १ क्षणैकसाध्यका (र्यं मासेनापि न करो-ति २ ) र्यस्य मासेन सम्पादनशीलः ॥ १३९० ॥

**दुःखम्**-सर्वेषां प्रतिकूलतया वेदनीयम् १ इतरद्वेषानधीनद्वे-षविषयः । सर्पादावतिव्याप्तिवारणायेतरद्वेषानधीनेति २ द्विष्टसाधनताविषयकजन्यज्ञानाजन्यद्वेषविषयगुणः ॥१३९३॥

**दुराचारिणी**-अपचरित्रा १ परभर्तृगामिनीति ग्रं० ॥१३९५॥

**दूषकः**-दोषोत्पादकः १ सुदोषत्वसम्पादको वा ॥ १३९७ ॥

**दूषणं**-दोषजनकम् १ बाधकप्रमाणोपन्यासरूपयुक्तिभिः खण्डनं

**दूषितत्वम्**-प्राप्तदोषत्वम् * १ दूषणयुक्तत्वम् ॥ १४०१ ॥

**दृश्यत्वं**-भानभास्यत्वम् *१ फलविषयत्वम् २ वृत्तिप्रतिफलितचिद्विषयत्वमिति ग्रं० ३स्वसमसत्ताकज्ञानविषयत्वम्॥१४०५॥

**दृष्टकूटं**-कूटार्थभाषितवाक्यम्१अन्यार्थत्वे सत्यन्यार्थबोधकत्वं दृष्टकूटत्वम् २ पर्वताग्रे रथो याति भूमौ तिष्ठति सारथिः, भ्रमँश्च वायुवेगेन पदमेकं न गच्छति 'कुलालचक्रम्' पञ्चभर्त्री न पाञ्चाली द्विजिह्वा न च सर्पिणी, श्यामास्या न च मार्जारी यो जानाति स पण्डितः 'लेखनी' ॥१४०९॥

**दृष्टान्तः**-दृष्टः अन्तोऽवसानं निर्णयो यस्मिन् १ वादिप्रतिवादि(निर्णीतोर्थः २) संमतोऽर्थः, यथा महानसम् ३ वादिप्रतिवादिनोः साध्यसाधनोभयप्रकारकतदभावद्वयप्रकारकान्यतरनिश्चयविषयः ४ निश्चितसाध्यकत्वं दृष्टान्तत्वम् ॥ १४१४ ॥

**दृष्टार्थापत्तिः**-अनुपपद्यमानदृष्टार्थज्ञानात्तदुपपादकीभूतार्थान्तरकल्पनम्, यथा दिवाऽभोजिदेवदत्ते रात्रिभोजनमन्तरानुपपद्यमानपीनत्वदर्शनात्तदुपपादकीभूतस्यार्थान्तरस्य(रात्रिभोजनस्य ) कल्पनम् ॥ १४१६ ॥

**दृष्टिः**-दर्शनम्१चक्षुर्द्वारारूपोपलब्धिहेतुमनोवृत्तिः ॥१४१८॥

**दृष्टिसृष्टिः**-दृष्टिसम ( ानकालीनसृष्टिः १ ) समया विश्वसृष्टिः २ दृष्टिरेव विश्वसृष्टिः ३ त्रिविधसत्ताबहिर्भूतत्वे सत्यसद्विलक्षणत्वम्

**देवतात्वम्**-मन्त्रकरणकहविस्त्यागभागित्वेनोद्देश्यत्वम् १४२३

**देवताधिकरणन्यायः**-देवतानां यज्ञादावधिकारित्वतदभाव-योरन्यतरसाधको न्यायः १ देवतानां विग्रहवत्त्वतदभावयोरन्य०

**देवयानम्**-सुराणां ( यानम् १ ) गतिसाधनविमानम् ॥१४२६॥

**देवयानमार्गः**-देवः परेशो यायतेऽनेन मार्गेण १ अर्चिराद्यभि-मानिदेवाधिष्ठितो मार्गः २ नागवीथ्युत्तरे यच्च सप्तर्षिभ्यश्च दक्षिणम्, उत्तरः सवितुः पन्था देवयानस्तु स स्मृतः ।

**देशान्तरं**-अन्यो देशः १ महानद्यन्तरं यत्र गिरिर्वा व्यवधा-यकः । वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥ १४३१ ॥

**देशपरिच्छेदः**-यत्किञ्चिद्देशावृत्तित्वम् १ स्वाधिकरणदेश-वृत्त्यत्यन्ताभावप्रतियोगित्वमिति ग्रं० ॥ १४३२ ॥

**देहः**-इन्द्रियाश्रयः * १ प्रतिक्षणमुपचीयमानावयवः ॥१४३५॥

**देहवासना**-सदन्नपानादिसेवनबलवीर्यादिसंपादनालङ्करणादि-भिर्देहसौष्ठवसंपादनाभिनिवेशहेतुः १ देहानुभवजनितत्वे सति देहस्यैव पुनः पुनः(पुष्ट्याद्यर्थम् ) स्मरणहेतुरित्यादर्शे २ संपा-दयितुमशक्यत्वात्क्लेशबहुत्वादप्रामाणिकत्वात्पुरुषार्थानुपयोगि-त्वात्पुनर्जन्महेतुत्वादिति निरन्तरचिन्तनं देहवासनानिवृत्त्युपायः

**देहाध्यासः**-देहस्य तद्धर्मस्य वात्मतया तद्धर्मतया वाध्यासः ।

**दैनन्दिनप्रलयः**-ब्रह्मणः सुषुप्तिः * १ समष्टिलिङ्गशरीरलयः ।
**दोषः**—तावदन्यतमः *१भ्रमोत्पादकः २ कार्यविरोधित्वं दोषत्वं
**द्योतकः**-क्रियाविशेषाक्षेपकः * १ तात्पर्यग्राहकः २ संबन्धपरिच्छेदक इति ग्रं० ३ स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकः ।
**द्रवत्वम्**—आद्यस्यन्दनासमवायिकारणम् ॥ १४४८ ॥
**द्रव्यत्वं**—लिङ्गसङ्ख्याकारकान्वितत्वमिति वै० १ गुणक्रियाश्रयत्वमिति मी० २ साक्षात्संबन्धेनेन्द्रियग्राह्यत्वम् ३ संयोगवद्वृत्तिसत्तावान्तरजातियोगित्वमिति लक्षणमालायाम् ४ गगनारविन्दसमवेतत्वे सति नित्यगन्धासमवेतत्वम् ॥ १४५४ ॥
**द्रोहः**—अहितेच्छा १ अनिष्टचिन्तनं वा २ परेषु स्वच्छन्दवृत्तिविरोधः * ३ दुःखजनकक्रियारूपापकारजनकश्चित्तवृत्तिविशेषः ।
**द्वन्द्वसमासः**-सर्वपदार्थप्रधानः१परस्परानन्वित(ार्थकानेकपदघटितत्वम् २ )समस्यमाननिखिलपदार्थबोधकसमासः १४६२
**द्वारं**-गृहनिर्गमस्थानम् १ 'व्यापार'लक्षणमप्यत्र पठनीयम्१४६३
**द्वितीयात्वं**-तिबन्तपचधातूपस्थाप्यपाकधर्मिककर्मत्वानुभवानुकूलसुप्सजातीयत्वम् ॥ १४६४ ॥
**द्वेषः**-वृथा निन्दा १परानिष्टाभिलाषः *२ द्विष्टसाधनताज्ञानजन्यगुणः
**द्वैतवादः**-जीवेश्वरादिभेदनिर्णायकः कथाविशेषः ।
**द्वैताद्वैतम्**—कार्यात्मना द्वैतं कारणात्मनाऽद्वैतम् ॥ १४६९ ॥
**द्यणुकम्**—परमाणुद्वयारब्धकार्यद्रव्यम् ॥ १४७० ॥

## ध

**धनुर्वेदः**-धनुर्विद्याबोधकशास्त्रम् १ धनुःप्रयोगसंहारज्ञापको वेदः

**धर्मः**-अन्याश्रितत्वे सत्यस्वतन्त्रः *१ कल्याणकारिकर्म २ विहितकर्मजन्य इति ग्रं० २ वेदप्रतिपाद्यः प्रयोजनवदर्थः। प्रयोजनेऽतिव्याप्तिवारणाय **प्रयोजनव**दिति, भोजनादावतिव्याप्तिवारणाय **वेदप्रतिपाद्य** इति, श्येनादावतिव्याप्तिवारणायार्थं इति ४ कार्यनियोगापूर्वपर्यायकैः शब्दैरुच्यमानो धात्वर्थसाध्यस्वर्गादिफलसाधनपुरुषगुण इति प्राभाकराः ५ यागजन्यस्वर्गजनकवृत्तिगुणत्वव्याप्यजातिमानिति तार्किकाः ६ क्रियासाध्यत्वे सति श्रेयस्कर इति लौकिकाः ७ धरति लोकान् ॐ ८ ध्रियतेनेनेति ९ सत्याज्जायते, दयया दानेन च वर्धते, क्षमायां तिष्ठति, क्रोधान्नश्यति

**धर्मशास्त्रं**-वेदार्थ(ानुभवजन्यं शास्त्रम् १)स्मरणपूर्वकरचितं शास्त्रं

**धर्मी**-धर्माश्रयः १ प्रतियोगिभिन्नत्वे सति भेदनिरूपकत्वं धर्मित्वं

**धातुत्वं**-क्रियावाचित्वे क्रियानिरूपितशक्तिविशिष्टत्वे वा सति [गणपठितत्वं

**धात्वर्थः**-फलानुकूलव्यापारः।

**धारणा**-न्यायपथस्थितिः १ सारासारावधारणपूर्वकं प्रत्युक्तिसमये स्मरणयोग्यतापादनम् * २ मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाचक्रदेशानामन्यतरस्मिन्प्रत्यगात्मनि वा चित्तस्थापनं

**धारावाहिकज्ञानं**-घटोघट इत्याकारकः सततप्रत्ययः १४९२

**धृतिः**-अवसन्नानां देहेन्द्रियाणामवष्टम्भहेतुः प्रयत्नः॥१४९३॥

**धैर्यं**-शोकादिजनितोपप्लवनिवारणकारणीभूतवृत्तिः [वाहकर्ता
**ध्याता**-ध्यानाश्रयः १ विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्र-
**ध्यानं**-अन्तराऽन्तरा वृत्त्यन्तरवती प्रत्ययैकतानता (=सजाती-
यप्रत्ययप्रवाहः) १ 'निदिध्यासन'लक्षणमप्यत्र पठनीयम् १४९६
**ध्येयत्वम्**-ध्यानविषयत्वम् ॥ १४९७ ॥
**ध्रुवत्वं**-प्रकृतधात्वर्थव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्र-
यत्वम् * १ प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वम् ।

## न

[जातिसंबद्धं
**नगरं**-बुद्धिजीविजननिवासः १ पण्यक्रियादिनिपुणत्वे सत्यनेक-
**ननु**-संबोधनम् * वाक्यारम्भः २ प्रत्युक्तौ आक्षेपः । [म्यावस्था
**नपुंसकलिङ्गं**-इदमितिव्यवहारविषयः * १ सत्त्वादिगुणानां सा-
**नमस्कारः**-'प्रणाम'वदस्य लक्षणमनुसंधेयम् । [पारः
**नमस्कारमङ्गलं**-स्वनिष्ठापकर्षविषयकबोधानुकूलः स्त्रीयव्या-
**नरकः**-पापिलोकः पापभोगस्थानम् १ नास्त्यस्मिन्रमणं रतिकरं
स्थानमल्पमपीति । [ग्रन्थविशेषः
**नाटकं**-अङ्कसंध्यामुखादिमत्त्वे सति गद्यपद्यप्राकृतभाषादिमय-
**नादः**-संवृते गलविवरे यत्कण्ठनिनादनकरणम् ॥ १५०७ ॥
**नांतरीयकः**-तत्सत्तानियतसत्ताकः १ अन्यनिष्पादकयत्ननिष्पाद्यः
**नाम**-संभावना * १ विभक्तिहीनशब्दः २ लिङ्गसङ्ख्यान्वय्यर्थप्र-
तिपादकमिति ग्रं० ३ शब्देनोच्चारितेनेह येन द्रव्यं प्रती-

यते, तदक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ १५१३ ॥

**नाममात्रत्वं**–स्ववीर्यहीनत्वे सति सञ्ज्ञामात्रधारित्वम् १५१४

**नास्तिकः**–वेदनिन्दकः १ परलोकाद्यभावप्रतिपादक इति ग्रं०

**निगमः**–अध्वनिपर्य्यायकथनेन वेदार्थबोधकः ॥ १५१७ ॥

**निगमनं**-सहेतुकं पक्षस्य साध्यवत्तया पुनर्वचनम् १ हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनम् ,यथा तस्मात् (धूमात् )तथा(वह्निमान्)इति

**निग्रहः**–पराजयः १ अनुग्रहाभावः २ 'निरोध' लक्षणमप्यत्रपठ०

**निग्रहस्थानं**-पराजयहेतुः १ वादिप्रतिवादिनोऽसामर्थ्यबोधकं

**निघण्टुः**–नामसङ्ग्रहः * १ पर्यायनाम्नामेकत्रार्थकथनार्थसङ्ग्रहः २ वैदिकद्रव्यदेवतात्मकपदार्थपर्यायशब्दात्मकत्वम् ॥ १५३५ ॥

**नित्यत्वं**–कृताकृतप्रसङ्गित्वमिति वै० १ अविच्छिन्नपरम्पराकत्वम् * २ सर्वकालवृत्तित्वम् ३ त्रैकालिकनिषेधात्यन्ताभावाप्रतियोगित्वमिति ग्रं० ४ ध्वंसाप्रतियोगिवृत्तित्वविशिष्टसत्तायोगित्वं

**नित्यकर्म**-अवश्यापेक्षितफलसाधनं कर्म १ करणे चित्तशुद्ध्यतिरिक्तफलाननुबन्धित्वे सत्यकरणे प्रत्यवायानुबन्धित्वम्, यथा ब्राह्मणस्य संध्यागायत्र्यादि २ प्रत्यवायजनकीभूताभावप्रतियोगित्वम्, यथा एकादश्यामुपोषणमिति ३ अहरहर्जायमानत्वम्, यथा नित्यं कुमाराः क्रीडन्तीति ॥ १५३४ ॥

**नित्यप्रलयः**–प्राणिनां सुषुप्तिः १ नित्यः प्रात्यहिकः प्रलयः ।

**निदिध्यासनं**-अपरोक्षनिश्चयत्वसंपादक( ो व्यापारः १ ) स्त-

र्कः *२ श्रुतार्थस्य नैरन्तर्येण दीर्घकालमनुसंधानम् ३ विजातीयप्रत्ययतिरस्कारेण सजातीयप्रत्ययप्रवाहीकरणमिति कौस्तुभे।

**निद्रा**—अभावप्रत्ययालम्बना वृत्तिः *१ प्रबुद्धप्रत्यवमर्शहेतुः।

**निंदा**-दोषाविष्करणम् १ विरोधिभिः पुरुषैः स्वस्मिन्नापादिता दोषोक्तिरिति ग्रं० २ आस्येन परस्य विद्यमानाविद्यमानदोषसङ्कीर्तनं

**निन्दार्थवादः**—अनिष्टबोधनद्वारा ( निषेधवाक्यैकवाक्यतया निवर्तकं वाक्यम् १ ) विध्यर्थप्रवर्तकं वचनम् ॥ १५४७ ॥

**निन्दितं**-निन्दायुक्तम् १ शास्त्रलोकयोर्गर्हितमिति ग्रं० ॥१५४९॥

**निपातः- निपातनं** } निकृष्टः पातः १ अन्तिमपतनम् *२ सिद्धप्रक्रियस्य निर्देशः ३ अन्यादृशप्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं

**निमन्त्रणं**—आवश्यकश्राद्धभोजनादौ प्रवर्त्तनम् ॥ १५५२ ॥

**निमित्तकारणं**-स्वातिरिक्तकार्यजनकम् १ कार्योत्पत्तिमात्रकारणम्, यथा घटादेः कुलालादि २ कार्यानुकूलव्यापारवत्त्वं निमित्तकारणत्वम् ३ कार्यस्थित्यनियामकत्वे सति कार्यजनिनियामकत्वम्। उपादानकारणवारणाय सत्यन्तम् ॥ १५५६ ॥

**नियमः**-अनुमित्यनुकूलसंबन्धः १ न्यूनाधिकावृत्तिः २ अविनाभावेन सहावस्थानमिति ग्रं० ३ निश्चयानुकूलप्रतिबन्धः ४ जन्महेतुकाम्यधर्मान्निवर्त्य मोक्षहेतौ निष्कामधर्मे नियमयति प्रेरयतीति ५ शौचा(द्यन्यतमः ६)दिसंपादनम् ७ कायवाक्साध्यत्वे सति योगाङ्गविशेषः ※ ८ आमुष्मिकसाधनकर्मरू(पो व्रतः ९) पाङ्गीकारः।

**नियमविधिः**-पक्षे(ऽप्राप्तस्य प्रापकत्वम् १) प्राप्तस्याप्राप्तांश-पूरको विधिः, यथा यागाङ्गत्वेन प्राप्तानां व्रीहीणां नखविदलनमुसलावहननयोर्द्वयोः पक्षयोः कदाचिन्नखविदलनस्य प्राप्तौ सत्यां मुसलावहननमप्राप्तं स्यात्तस्य पूरको व्रीहीनवहन्यादित्यवघातविधिः २ अन्यनिवृत्तिफलकासिद्धविषयकविधिः ॥१५६७॥

**नियोगः**-प्रवृत्त्यनुकूलो व्यापारः १ प्रवर्तकज्ञानोपधायकतानिर्वाहकव्यापारः २ 'एवं कुरु' इत्याकारकादेशः । [यर्क

**नियोज्यं**-नियोग(जन्यप्रवृत्तिमत् १)ार्हम् २ प्रवर्तकज्ञानोपधा-

**निरर्थकत्वं**-प्रयोजनशून्यत्वम् १ प्रकृतानुपयोगित्वं वा १५७३

**निरुक्तं**-पदानामवयवार्थनिर्वचनप्रतिपादको ग्रन्थः १ वैदिकपदानां पर्यायव्युत्पत्त्यादिप्रतिपादकं शास्त्रम् ॐ २ शब्दस्य सर्वावयवार्थानुगमेन प्रसिद्धार्थादर्थान्तरे वृत्तिः, यथा सोमशब्दस्य पार्वतीसहितमहेश्वरे शक्तिरिति विवरणे । [वत्त्वं

**निरुपाधिकभेदत्वं**-उपाधिसत्ताव्याप्यसत्ताकत्वात्यन्ताभाव-

**निरुपाधिकभ्रमः**-अधिष्ठानज्ञाननिवर्त्यो भ्रमः ॥ १५७८ ॥

**निरुपाधिकाध्यासः**-उपाधिनिरूपणानधीननिरूपणाध्यासः।

**निरूढः**-शक्तितुल्यलक्षणयार्थबोधकः शब्दः ॥ १५८० ॥

**निरूढलक्षणा**-अनादितात्पर्यविषयीभूतार्थनिष्ठा लक्षणा, यथा नीलो घटः । [प्रयोगः

**निरूपणं**-लक्षणप्रमाणस्वरूपाभिधानम् १ तत्त्वज्ञानानुकूल

**निरोधः**–गत्यादिप्रतिरोधः ॐ १ इन्द्रियाणां विषयेभ्यो निग्रहणं
**निर्गुणत्वं**-गुणातीतत्वम् १ विद्यादिहीनत्वम् ॐ २ स्वसमानसत्ताकधर्मवद्यद्यत्तद्भिन्नत्वे सति तुच्छभिन्नत्वम् ॥ १५८८ ॥
**निर्णयः**-अनुभूतार्थकथनम् *१ संदेहनिराकरणफलकं ज्ञानम् २ विरोधपरिहारकोऽधिकरणाङ्गविशेषः ३ सिद्धान्तसिद्धविचार्यवाक्यतात्पर्यावधारणमिति ग्रं० ॥ १५९१ ॥
**निर्देशः**-शब्दप्रयोगः *अव्यवधानपूर्वककथनम् २ विस्तारपूर्वक०
**निर्वाहकं**-उत्पत्त्यनुकूलम् १ तदन्यत्वे सति तन्निर्वाहकनिर्वाह्यं
**निर्विकल्पकं**-वस्तुस्वरूपमात्रग्रहणम् १ संसर्गानवगाहिज्ञानम्, यथा सोऽयं देवदत्तः २ विशेषणविशेष्यसंबन्धानवगाहिज्ञानम्
**निर्विकल्पसमाधिः**-ज्ञातृज्ञानज्ञेयविकल्पानवभासपुरःसरमात्मनि चित्तसमाधानम् । [शकयत्नः
**निवृत्तिः**–प्रवृत्तिप्रागभावरूपमौदासीन्यम् १ )त्त्युपाधिविना-
**निश्चयः**-संशयविरोधिज्ञानम् १ तदभावाप्रकारकत्वे सति तत्प्रका-
**निषिद्धकर्म**-प्रत्यवायजनकं कर्म, यथा गोहत्यादि । [रकज्ञानं
**निषेधवाक्यं**-पुरुषनिवर्तकवाक्यम् १ अनिष्टसाधनताबोधकवा०
**निष्कर्षः**-सारांशः १ इयत्तापरिच्छेदो वा २ निष्कृष्टः ॥१६१०॥
**निष्कामत्वं**-भोगेच्छाशून्यत्वम् १ विषयकामनासामान्याभाववत्त्वं
**निष्कामकर्म**-कामनारहितं कर्म १ कर्तृत्वाभिमानफलेच्छाऽभाववत्त्वे सत्यन्तर्यामीश्वरचरणैकसमर्पितत्वं निष्कामकर्मत्वम् ।

**निष्परिग्रहः**-कन्थाकौपीनाध्यात्मपुस्तकादिव्यतिरिक्तद्रव्यानङ्गीक ( र्ता १ ) रः ॥ १६१६ ॥

**नीतिः—** } न्यायबोधकवाक्यम् १ राजविद्यानियन्तृशास्त्रम् २
**नीतिशास्त्रं** } संधिविग्रहादिप्रतिपादकशास्त्रमिति ग्रं० १६१८

**नृत्यं**-सङ्गीतशास्त्रानुकूलहावभावपूर्वकहस्तादिव्यापारः १ पदार्थाभिनयपूर्वकत्वे भूचरणसंयोगत्वे वा सति सविलासतालानुसार्यङ्गविक्षेपः

**नैमित्तिककर्म**—कुतश्चिन्निमित्तात्कृतं कर्म, यथा पुत्रेष्ट्यादि १ अनुष्ठाने फलविशेषजनकत्वे सत्यननुष्ठाने प्रत्यवायजनकम् ।

**नैमित्तिकप्रलयः**-सर्वकार्यद्रव्यध्वंसः १ कार्यद्रव्यानधिकरणकार्याधिकरणकालः ॐ २ कार्यब्रह्मणो दिवसावसाननिमित्तकत्रैलोक्यमात्रप्रलयः ३ एकस्मिन्मन्वादावपगतेऽपराधिपत्यान्त-[रालकालः

**नैयायिकः**-षोडशपदार्थानुसारिन्यायज्ञः ।

**नैवेद्यं**-देवतोद्देशेन (निवेदनीयद्रव्यम् १) त्यक्तद्रव्यम् ॥ १६२८ ॥

**नैष्ठिकब्रह्मचारी**-यावज्जीवं गृहीतब्रह्मचर्यव्रतः ॥ १६२९ ॥

**नोदनसंयोगः**—स्पर्शवद्द्रव्यसंयोगः ॥ १६३० ॥

**नोदना**-क्रियासु प्रवर्तकं वचनम् १ क्रियां प्रति प्रवर्तकं वचः ।

**न्यायः**-लोकशास्त्रप्रसिद्धदृष्टान्तः १ प्रमा(णैरर्थपरीक्षणम् २)णानुग्राहकतर्कः ॐ ३ उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायः ४ अनुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकवाक्यम्

**न्यायशास्त्रं**-परार्थानुमानप्रधानं शास्त्रम् १ पदार्थानां सर्वेषामनुगमरूपेण प्रकाशको ग्रन्थः ॥ १६३९ ॥

**न्यूननिग्रहस्थानं**-यत्किञ्चिदवयवशून्यावयवाभिधानम् १६४०
**न्यूनवृत्तित्वं**-तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वम्

## ❀ प ❀

**पक्षः**-अनुमित्युद्देश्यः १ संदिग्धसाध्यवान् २ सिषाधयिषितधर्मानुयोगी ३ वादिप्रतिवादिदर्शितविप्रतिपत्तौ कोटिः ४ शुक्लकृष्णप्रतिपदादिपञ्चदश्यन्तपञ्चदशतिथ्यात्मककाल इति मौहूर्तिकाः
**पक्षपातः**-न्यायविरुद्धपक्षावलम्बनम् १ पक्षेऽन्याय्यसाहाय्ये पातः अभिनिवेशः । [निवेशः २) स्थितिः
**पङ्क्तिः**-ग्रन्थार्थबोधकशब्दः १ सजातीयपदार्थानां (क्रमेण सं·
**पञ्चीकरणं**-स्वस्वेतरभूतचतुष्टयभागविशेषेण मिश्रीकरणम् १ भूतानि प्रत्येकं पञ्चधा विभज्य सद्भूतांशे पञ्चसमुदायकरणम् २ पञ्चानां भूतानामेकैकं द्विधा विभज्य स्वार्द्धभागं विहायार्धभागं चतुर्धा विभज्येतरेषु योजनम् । [धानुकूलसुप्सजातीयत्वं
**पञ्चमीत्वं**-पतधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मिकविभागबो·
**पण्डितः**-पण्डा शास्त्रतात्पर्यवती सदसद्विवेकिनी वा बुद्धिः सञ्जाता यस्य
**पतनं**-पातित्यम् १ अधःसंयोगानुकूलक्रिया । [ता यस्य
**पतित्वं**-निरतिशयदृक्क्रियाशक्तिमत्त्वमिति शैवाः ॥ १६५८ ॥
**पतितः**-नरकगमन(हेतुभूतक)सूचककर्मविशेषकारकः १६५९
**पतिव्रता**-आर्त्तार्ते मुदिता हृष्टे प्रोषिते मलिना कृशा,
मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥१६६०॥

**पत्रं**-लेखनाधारः १ पात्यते स्थानात्स्थानान्तरं समाचारोऽनेन।

**पदं**-विभक्त्यन्तशब्दः ※ १ वर्णसमूहः २ अर्थवद्वर्णो वा ३ वाक्यैकदेशः ४ प्रत्येकं संभूय वा वाक्यांशबोधको वर्णः * ५ शाब्दप्रतीत्यजन्यशाब्दप्रतीतिजनकं वर्णात्मकम्। शाब्दप्रतीतिजन्यशाब्दप्रतीतिजनकं वाक्यं प्रथमविशेषणेन व्यावर्त्यते, द्वितीयेन प्रत्यक्षानुमानादावतिव्याप्तिर्व्युदस्यते, वर्णात्मकत्वविशेषणेनादृष्टेश्वरादि ६ वृत्तिमत्त्वं पदत्वम् ॥ १६६९ ॥

**पदार्थः**-पद(स्यार्थः१)बोध्योऽर्थः २ पदनिष्ठवृत्तिविषयः * ३ द्रव्याद्यन्यतमः। [स्फूर्त्यवस्था

**पदार्थाभावनी**-असंसक्तिभूमिकाभ्यासपाटवाच्चिरं प्रपञ्चापरि-

**पदैकवाक्यत्वं**-निरूप्यनिरूपकभावापन्नविषयताप्रयोजकत्वम् १ पदस्य वाक्येन सहैकवाक्यतयैकार्थबोधकत्वम् २ पदरूपार्थवादवाक्यस्य विधिवाक्येन सह यदेकवाक्यत्वमिति ग्रं०

**पद्यं**-छन्दोबद्धवाक्यम् १ पादलक्षणसहितपदसमूहः। [कारणं

**परत्वं**-शत्रुत्वम् * १ सीमापरिच्छिन्नत्वम् २ परव्यवहारासाधारण-

**परकृत्यर्थवादः**-पुरुषविशेषनिष्ठमिथोविरुद्धकथनम्, यथा यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् ॥ १६८५ ॥

**परतन्त्रत्वं**-उत्कृष्टशास्त्रत्वम् * १ इतरसत्ताधीनसत्ताकत्वम्।

**परतउत्पत्तिकत्वं**-ज्ञानमात्रजनकसामग्र्यतिरिक्तकारणप्रयो-

---

१ शब्दजनिता या प्रतीतिस्तयाऽजन्यत्वे सति शाब्दप्रतीतिजनकं यत्तत्।

ज्यत्वम् १ आगन्तुकभावकारण (ापेक्षज्ञानसामग्रीजन्यत्वम् २) सहकृतज्ञानप्रयोजकप्रयोज्यत्वमिति ग्रं० ॥ १२८९ ॥

**परतोग्राह्यत्वं**–स्वाश्रयग्राहकातिरिक्तसामग्रीग्राह्यत्वम् १ ज्ञानमात्रग्राहकसामग्रीभिन्नसामग्रीग्राह्यत्वमिति ग्रं० ॥१६९१॥

**परतःप्रमाणत्वं**-आम्नायरूपमूलप्रमाणसापेक्षप्रमाणत्वम् १६९२

**परदेशः**–विदेशः १ स्वाधिष्ठितदेशाद्भिन्नदेशः ॥ १६९४ ॥

**परप्रकाशत्वं**-वेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम् ॥१६९६॥

**परममहत्त्वं**-अपकर्षानाश्रयपरिमाणवत्त्वम् । [खासूत्ररहितः

**परमहंसः**-परमः श्रेष्ठः हंस आत्मा यस्य १ आत्मनिष्ठापूर्वकशि-

**परमाणुः**-परमः सर्वचरमकः अणुः १ मूर्तत्वे सति निरवयवः २ मनोभिन्नत्वे सति परमाणुत्वपरिमाणवान् ३ जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः, तस्य षष्ठितमो भागः परमाणुः स उच्यते ।

**परमात्मा**-मायायां प्रधानभूतसत्त्वोपाधिकचैतन्यम् १ 'ईश्वर'लं०

**परम्परासंबन्धः**-स्वसंबन्धिनः संबन्धः १ साक्षात्संबन्धिनः सं०

**परम्परासाधनं**–परम्परया साधनम् ॥ १७०६ ॥

**परलोकः**–शरीरान्तरसंबन्धः १ स्थूलशरीराभिमानपरित्याग इति ग्रं० २ पारलौकिकस्थितिस्थानम् ॥ १७०९ ॥

**परवैराग्यं**-ब्रह्मज्ञानसाधारणविषयवैतृष्ण्यम् ॥ १७१० ॥

**परसामान्यं**-अनुगतबुद्धिव्यवहारहेतुभूतसत्ता १ अधिकदेशवृ-

**पराक्रमः**-परबलनिराकरणम् १ 'पुरुषार्थ'लक्षणम० [त्तित्वं

**पराजयत्वं**-कृत्यसाध्यत्वधीप्रयुक्तप्रवृत्त्यभावत्वम् ॥१७१४॥

**परामर्शः**-व्याप्तिवि(शिष्टपक्षधर्मताज्ञानम् १)षयत्र.पक्षधर्मता-

**परार्थानुमानं**—न्यायप्रयोज्यानुमानम् । [ज्ञानं

**परार्थानुमितिः**—स्वयं व्याप्याद्व्यापकं प्रतीत्य परप्रतिपत्त्यर्थं प्रयुक्ता(त्पञ्चा)त्र्यवयववाक्यात्परस्य व्यापकप्रत्ययः ॥१७१८

**परार्द्धं**—सङ्ख्या(ऽशेषः १)पर्यवसानम् २ स्थानात्स्थानं दशगुण-मेकैकं गुण्यते द्विजाः,ततो ह्यष्टादशे भागे परार्द्धमभिधीयते ।

**परावाक्**-मूलाधारचक्रस्थवाग्व्यभिव्यङ्ग्योतिसूक्ष्मात्माऽस्मदा-देरप्रत्यक्षः शब्दः । [णम् १)धिकार्थार्जनं

**परिग्रहः**-शरीरनिर्वाहा(र्थकमस्पृहत्त्वेऽपि परोपनीतं बाह्योपकर-

**परिचयः**—तत्तेदन्तोल्लेखिनी बुद्धिः १ ज्ञातस्य पौनःपुन्येन ज्ञानं

**परिचायकत्वं**-तदघटकत्वे सत्यर्थविशेषज्ञापकत्वम्॥१७२६॥

**परिच्छिन्नत्वं**—भेदप्रतियोगित्वम् १ प्रतियोगिसमानसत्ताका-त्यन्ताभावप्रतियोगित्वमिति ग्रं० २ अत्यन्ताभावाद्यन्यतमप्र०

**परिणामः**—पूर्वावस्थापायेऽवस्थान्तरापत्तिः १ पूर्वरूपपरित्यागे सति नानाकारप्रतिभास इति ग्रं० २ उपादानस (लक्षणत्वे) मस-त्ताकत्वे सत्यन्यथाभावः । विवर्तवारणाय सत्यन्तम्, घटस्य तन्तुपरिणामत्ववारणाय विशेष्यम् ३ प्रकृतेरन्यथाभावः १७३३

**परिभाषा**-कृत्रिमसंज्ञा १ आधुनिकसङ्केतो वा २ उभयवृत्तिधर्मा-

वच्छिन्नसङ्केतवती संज्ञा २ शास्त्रकृतासाधारणसङ्केतत्वम् १७३७

**परिमाणं**–मानव्यवहारासाधारणकारणम्। दण्डादिवारणाय मानेति, कालादिवारणायासाधारणेति, शब्दत्ववारणाय कारणमिति

**परिशिष्टं**-अवशिष्टार्थबोधकग्रन्थः।

**परिशेषः**-प्रसक्तप्रतिषेधे सत्यन्यत्राप्रसङ्गाच्छिष्यमाणे संप्रत्ययः

**परिशेषानुमानं**-विशेषाभावसहकृतसामान्यहेतुकानुमानम्।

**परिसङ्ख्याविधिः**–उभयप्राप्तावितरव्यावृत्तिबोधको विधिः, यथा यागाङ्गत्वेन पशुरशनाग्रहणे कर्तव्ये यागाङ्गत्वविशेषादश्वगर्दभयोर्द्वयोरशनाग्रहणशङ्कायामश्वाभिधानीमादत्ते इति गर्दभरशनाग्रहणव्यावृत्तिविधिः। यथा वा पञ्च पञ्चनखा(=खङ्गकूर्मशशशल्लकीगोधाः) भक्ष्या इति, न कलञ्जं भक्षयेदित्यादिनिषेधवाक्येऽतिव्याप्तिवारणायोभयप्राप्ताविति। [पारः

**परिहारः**-दोषा(पनयः१)द्युद्धरणम् २ अज्ञानाभावसंपादकव्या-

**परीक्षकः**–तर्केण प्रमाणैरर्थं परीक्षिता १ प्रमाणेन परीक्ष्य व्यवहर्ता ॐ २ शास्त्रसंस्कृतमतिः ३ प्राप्तशास्त्रजन्यधीप्रकर्ष इति ग्रं०

**परीक्षा**-दुष्टादुष्टतावलोकनम् १ तर्कप्रमाणादिना वस्तुतत्त्वावधारणं

**परोक्षत्वं**–व्यहवृत्तत्वम् १ कुड्यकटाद्यन्तरितत्वम् ॐ २ परोक्षज्ञानविशिष्टत्वम् ३ साक्षात्काराविषयत्वमिति ग्रं० ॥१७५५॥

**परोक्षज्ञानं**-विषयचित्तादात्म्यानापन्नं प्रमाणचैतन्यम् १७५६

**परोपकारः**–परस्य हितसम्पादनम् ॥ १७५७ ॥

**पर्यन्तत्वं**-तदवधिकविप्रकर्षशून्यत्वे सति तत्सन्निकृष्टत्वम् १७५८

**पर्यवसानं**-तात्पर्यवृत्त्या बोधनम् । [र्थकथनं

**पर्यायः**-नानाशब्दैकार्थबोधकः १ तत्समानार्थकपदान्तरेण तद-

**पशुः**-सर्वमविशेषेण पश्यति १ पशुत्वसंबन्धी २ लोमवल्लाङ्गूलवत्त्वं

**पश्चिमत्वं**-अस्ताचलसन्निहितदेशावच्छिन्नत्वम् ॥ १७६५ ॥

**पश्यन्ती**-नाभिचक्रस्थवाय्वभिव्यङ्ग्यो योगिप्रत्यक्षगोचरः शब्द

**पाकः**-विजातीयतेजःसंयोगः १ विक्लित्त्यनुकूलव्यापारो वा ।

**पाखण्डः**-परवञ्चनार्थं(उच्छृङ्खलप्रवृत्तिः १)तपोजपाद्यभिनयः ।

**पाखण्डी**-वेद(ादेशान्यथा कर्ता १)विरुद्धार्थप्रतिपादकः १७७२

**पाठः**-कण्ठताल्वाद्यभिघातेन शब्दस्योत्पत्तिरभिव्यक्तिर्वा १
शास्त्रादेः पौनःपुन्येनोच्चारणम् ॥ १७७४ ॥

**पाठवासना**-शास्त्रतात्पर्याग्रहणपूर्वकशास्त्रपाठमात्रेष्वासक्तिः ।

**पाणिः**-मणिबन्धावध्यङ्गुलिपर्यन्तः १ आदानक्रियासाधनेन्द्रियं

**पात्रम्**-स्वयजमानयो रक्षकम् १ पतन्तं त्रायते ॥ १७७९ ॥

**पादः**-श्लोकादिचतुर्थभागः १ पुनरावर्तमानत्वे सति विरतिमत्पदं

**पादेन्द्रियम्**-गमनक्रियासाधनमिन्द्रियम् ॥ १७८१ ॥

**पापं**-अनिष्टान्तरजनकम् १ वेदैकप्रतिपाद्यमनर्थम् २ निषिद्धक्रि-

**पापकर्म**-पापजनकं कर्म । [याजन्यं

**पापमध्यमम्**-आम्रपनसादिशरीरापादकम् ॥ १७८६ ॥

**पापसामान्यं**-लोकेज्यगोगजाश्वत्थतुलस्यादिशरीरप्रापकम् ।

**पापोत्कृष्टं**-परतापकगुच्छगुल्मवृश्चिकादिशरीरप्रापकम् १७८८
**पामरत्वं**-शास्त्रसंस्कारशून्यत्वे सत्यैहिकविषयपरमार्थदृष्टिमत्वं
**पायुः**-मलद्वारम् १ विसर्गक्रियासाधनमिन्द्रियम् ॥ १७९१ ॥
**पारमार्थिकः**-स्वाभाविकः १ ब्रह्मसमानसत्ताकः २ कालत्रयाबाध्यः
**पारायणं**-भागवतादीनामा(वृत्त्या पाठः १ )द्यन्तपाठाधिकारेण प्रवृत्तं
**पारिभाषिकः**-शास्त्रकारसङ्केतविशेषेण तत्तदर्थबोधकः शब्दः ।
**पितृत्वम्**-सपिण्डीकरणोत्तरश्राद्धजन्यफलभागित्वम् ॥ १७९७ ॥
**पुण्यं**-इष्टान्तरजनकम् १ विहितानुष्ठानजन्यत्वं पुण्यत्वम् १७९९
**पुण्यकर्म**-पवित्रं कर्म १ पुण्यजनकत्वं पुण्यकर्मत्वम् ॥ १८०१ ॥
**पुण्यमध्यमम्**-इन्द्रादिशरीरप्रापकम् ॥ १८०२ ॥
**पुण्यसामान्यम्**-यक्षादिशरीरापादकम् ॥ १८०३ ॥
**पुण्योत्कृष्टं**-हिरण्यगर्भशरीरप्रापकम् ॥ १८०४ ॥
**पुनरुक्तं**- } अनुवादं(न्यत्वे सति पुनर्वचनम् १) विना कथित-
**पुनरुक्तिः** } स्य पुनः कथनम् २ पुनः पुनरुक्तिः ३ एकार्थबोधका-
**पुरम्**-बहुग्रामीणव्यवहारस्थानम् । [नेकपदोक्तिः
**पुरश्चरणं**-मन्त्रफलसिद्ध्यर्थं नियतसङ्ख्याको जपः १ मन्त्रफल-
सिद्ध्यर्थमुपोद्घातत्वेन पूर्वसेवनमिति ग्रं० ॥ १८१० ॥
**पुराकल्पार्थवादः**-ऐतिह्यसमाचरिततया कीर्तनम् ॥ १८११ ॥
**पुराणं**-पुरातनम् १ पुरा (भवम् २)नवम् ॐ ३ वेदाख्यानोपनि-
बन्धनम् ४ सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च. वंशानुच-

रितश्चैव पुराणं पञ्चलक्षणम् । [सत्यजनकत्वं

**पुरुषः**-पूर्ष्वष्टसु वसतीति १ पुरुषार्थसंपादनयोग्यः २ अजन्यत्वे

**पुरुषार्थः**-पुरुषेण साध्योऽर्थः १ त्रिविधदुःखात्यन्तनिवृत्तिः ॐ २ पुरुषाभिलाषविषयः २ सुखावाप्तिर्दुःखपरिहारः ४ पुंस्त्वम् ।

**पुँल्लिङ्गत्वं**-अयमितिव्यवहारविषयत्वम् ॥ १८२६ ॥

**पुस्तकत्वं**-लिप्याधारत्वम् १ तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात्, मूर्खहस्ते न दातव्यं वदेदेवञ्च पुस्तकम् ॥१८२७॥

**पूजा**-धनाद्यर्पणम्१ पादप्रक्षालना(दिक्रिया२)चेनाद्यतिशयितृत्वं

**पूरकप्राणायामः**-इडया षोडशमात्राभिः प्राणवायोः पानम् ।

**पूर्वत्वम्**-प्रागभाववत्त्वम् ॐ १ क्रियाजन्यसंयोगप्रतियोगित्वम् ॐ २ उदयाचलसन्निहितदेशावच्छिन्नत्वम् ॥ १८३३ ॥

**पूर्वपक्षः**-सिद्धान्तविरुद्धकोटिः १ शास्त्रीयसंशयनिरासार्थः प्रश्न इति ग्रं० २ प्रकृतार्थविरोधितर्कोपन्यासरूपोधिकरणाङ्गविशेषः

**पूर्वमीमांसा**-पूर्वकाण्डवेदविचारशास्त्रम्१'कर्मकाण्ड'लक्षणम०

**पूर्ववदनुमानं**-पूर्वगृहीतव्यक्तिसामान्यविषयमनुमानम् १८३८

**पूर्ववृत्तित्वं**-कार्यप्रागभावाधिकरणक्षणवृत्तित्वम् ॥ १८३९ ॥

**पृच्छा**-ज्ञातुमिच्छा १ जिज्ञासाविषयकज्ञानानुकूलव्यापारः ।

**पृथक्त्वम्**-पृथग्व्यवहारासाधारणकारणम् ॥ १८४२ ॥

**पृथिवी**-पृथुत्वगुणयुक्ता १ गन्धसहचरितचतुर्दशगुणवतीति ग्रं०

**पैशून्यं**-पर(ोक्षे परदूषणवचनम् १)स्मै परोक्षे परदोषप्रकाशनं

**पौरुषेयत्वं**-नूतनानुपूर्वीरचनत्वम् १ प्रमाणान्तरेणार्थमुपलभ्य विनिर्मितत्वमिति मं० २ पूर्वानुपूर्व्यनपेक्षपुंविशेषबुद्ध्यधीनानुपूर्वीमत्त्वम् * ३ सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम् १८५०

**प्रकरणं**-उभयाकाङ्क्षा १ अङ्गवाक्यसापेक्षं प्रधानवाक्यमिति मी० २ सङ्गतिप्रदर्शनप्रयोजिकाकाङ्क्षा * ३ एकार्थप्रतिपादकग्रन्थांशः ४ शास्त्रसिद्धान्तप्रतिपादको ग्रन्थः ५ शास्त्रैकदेशसंबद्धं शास्त्रकार्यान्तरे स्थितमिति ग्रं० ॥ १८५६ ॥

**प्रकारत्वं**-सामान्यभेदकत्वम् * १ भासमानवैशिष्ट्यप्रतियोगित्वं

**प्रकाशनत्वम्**-स्वाभिप्रायाविष्करणत्वम् ॥ १८५९ ॥

**प्रकाशमानत्वं**-स्वसत्तायां स्वसत्ताप्रकारकसंशयाद्यगोचरत्वम्

**प्रकृतत्वं**-प्रकरणप्राप्तत्वम् १ प्रतिज्ञाविषयत्वमिति ग्रं० १८६२

**प्रकृतिः**-प्राचीनकर्मसंस्काराधीनस्वभावः * १ सत्त्वरजस्तमोगुणानां साम्यावस्था * २ सम्पूर्णाङ्गसंयुक्तो विधिः ३ प्राथमिकविधिप्रतिपादितसमग्रेतिकर्तव्यताकत्वमिति मी० ४ अजन्यत्वे सति जनकत्वं प्रकृतित्वम् ५ तत्त्वान्तरारम्भकत्वमिति सां० ६ अर्थावबोधहेतुप्रत्ययविधानावधिभूतशब्दत्वम् ७ प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वमिति वै० ॥ १८७० ॥

**प्रकृतिभावः**-संधिकार्यरहितत्वम् १ निर्विकारस्वरूपेणावस्थानं

**प्रगल्भत्वं**-प्रवीणमतित्वम् १ कार्याकार्यावधारणक्षमत्वं वा ।

**प्रणामः**-स्वापकर्षबोधककरशिरःसंयोगादिव्यापारः॥१८७५॥

**प्रतिकूलं**-द्वेषविषयः १ विरुद्धपक्षावलम्बित्वं प्रतिकूलत्वम् ।
**प्रतिग्रहः**-अदृष्टार्थ(दत्ताङ्गीकारः१)त्यक्तद्रव्यस्वीकारः १८७९
**प्रतिज्ञा**-कर्तव्यत्वप्रकारकज्ञानानुकूलव्यापारः१उत्तरकाले स्वकर्तव्यत्वेन निर्देशः,यथा 'इदं करिष्यामि' इत्याकारकवाक्यम् ॐ २ साध्यविशिष्टपक्षबोधजनकवचनम्, यथा पर्वतो वह्निमानिति ।
**प्रतिज्ञाहानिः**-स्वकृतोक्तपरित्यागः १ प्रतिज्ञातार्थपरित्यागः ।
**प्रतितन्त्रसिद्धान्तः**-समानतन्त्रासिद्धः परतन्त्रासिद्धः १ वादिप्रतिवाद्येकतरमात्राभ्युपगतः सिद्धान्त इति ग्रं० ॥ १८८६ ॥
**प्रतिपादनं**-प्रतिपाद्यं मुखतः प्रतिज्ञाय पश्चात्तत्सिद्धिहेतुप्रदर्शनम् । उपोद्घातवारणाय **मुखत** इति, असंबद्धहेतुव्यावृत्त्यर्थं **तत्सिद्धी**ति १ प्रतिपत्त्यनुकूलशब्दप्रयोगः ॥ १८८८ ॥
**प्रतिप्रसवः**-प्रतिषि(द्धस्य प्रतिषेधे पु०)द्धैकदेशस्य पुनर्विधानं
**प्रतिबन्द्युत्तरं**-अनिष्टान्तरप्रसञ्जकमुत्तरम्१ नोद्यपरिहारसाम्यमिति ग्रं० २प्रकृतैककल्पे प्रवृत्तं पुरुषमुद्दिश्याप्रकृतकल्पान्तरापादनं
**प्रतिबन्धः**- } **प्रतिबन्धकः** } कार्यानुकूलकिञ्चिद्धर्मविघटकः, यथाग्नौ दाहरूपकार्यानुकूलस्य कस्यचिद्धर्मस्य शक्त्याख्यस्य विघटको मणिमन्त्रौषधादिः १ सामग्रीकालीनकार्यानुत्पादप्रयोजकः २ पुष्कलकारणे सति कार्योत्पादविरोधी । सामग्र्यभावं व्यावर्तयितुं **पुष्कले**ति ३ कारणीभूताभावप्रतियोगी ।

---

१ यदि पुरुषत्वादयं चौरस्तदा एवं त्वमपि चौरः स्या इत्यापादनम् ।

**प्रतिबिम्बत्वं**–तदधीनत्वे सति तत्सदृशत्वम् १ उपाध्यन्तर्गत्वे सत्यौपाधिकपरिच्छेदशून्यत्वे सति बहिःस्थितस्वरूपकत्वम्। बिम्बवारणायाद्यम्, घटाकाशादिवारणाय द्वितीयम्, दर्पणाद्यन्तर्गततदवयववारणाय तृतीयमिति न्यायरत्नावल्याम् २ उपाधिनिमित्तस्वप्रतियोगिकव्याप्यावृत्तिभेदकत्वे सत्युपाधिपरिच्छिन्नत्वं

**प्रतिभा**–प्रत्युत्पन्नमतिः १ नवनवो(ल्लेख)न्मेषशालिनी बुद्धिः।

**प्रतिभाप्रमाणं**–अनियतदेशकाऽऽमाकस्मिकं सदसत्सूचकं ज्ञानम् १ श्वस्ते भ्रातागन्तेत्यादिकमिति ग्रं० ॥ १९०४ ॥

**प्रतियोगी**-यस्याभावः सः १ प्रति पूर्वं योगस्संबन्धः २ विरोधित्वं प्रतियोगित्वम् ३ धर्मिभिन्नत्वे सति भेदनिरूपकत्वम् १९०८

**प्रतिवादः**–वादिप्रयुक्तन्यायवाक्यविरुद्धवाक्यप्रयोगः १९०९

**प्रतिवादी**-वादिप्रयुक्तन्यायविरुद्धन्यायवाक्यप्रयोगकर्ता१९१०

**प्रतिषेधत्वम्**–कर्तृत्वाभावानुकूलव्यापारत्वम् ॥ १९११ ॥

**प्रतीकः**-प्रतिरूपः *१ आश्रयान्तरप्रत्ययस्याश्रयान्तरे प्रक्षेपः२ तद्भिन्नत्वे सति तद्बोधकत्वं प्रतीकत्वम् ॥ १९१४ ॥

**प्रतीकोपासनं**–अन्यवस्तुनोऽन्यरूपेणोपासनम् १ ब्रह्मप्रतीकानामादित्यादीनां ब्रह्मदृष्टयोपासनमिति ग्रं० ॥ १९१६ ॥

**प्रत्यक्षम्**– }
**प्रत्यक्षप्रमा** } ज्ञानाकरणकं ज्ञानम् १ इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानम्। सन्निकर्षध्वंसवारणाय **ज्ञानमिति**, अनुमित्यादिवारणायेन्द्रियार्थसन्निकर्षेति २ व्याप्त्याद्यज-

न्यत्वे सति स्वकालावच्छिन्नार्थबोधः ३ अनुपलब्ध्यर्थापत्ति-शब्दानुमानोपमानजप्रमितिव्यतिरिक्तत्वे सति प्रमितिः। अनुमादावतिव्याप्तिवारणायानुपलब्धीत्यादिविशेषणम्, घटादिवारणाय **प्रमितिरि**ति ४ अनधिगताबाधितवर्तमानयोग्य-विषयचैतन्याभिन्नं प्रमाणचैतन्यम्। अधिगतार्थविषयकयथार्थस्मृतावतिप्रसङ्गवारणार्थम**नधिगते**ति विषयविशेषणम्, भ्रमज्ञानेऽतिव्याप्तिवारणाया**बाधिते**ति, धर्माधर्मयोः प्रत्यक्ष-वारणाय **योग्ये**ति ५ 'ज्ञानगतप्रत्यक्ष'लक्षणमप्यत्र पठनीयम्

**प्रत्यक्षविषयः**-इन्द्रियजन्यज्ञानविषयः*१ योग्यत्वे सति वर्तमानविषयचैतन्याभिन्नप्रमाणचैतन्यविषयः२ 'विषयगतप्रत्यक्ष'ल०

**प्रत्यक्षप्रमाणं**-प्रत्यक्षप्रमाकरणम्। अनुमानादावतिव्याप्तिवारणाय **प्रत्यक्षे**ति, दण्डादिवारणाय **प्रमे**ति। [त्कार्यनिवृत्तिः

**प्रत्यक्षबाधः**-तत्त्वमस्यादिवाक्योत्थात्मसाक्षात्कारेणाज्ञानत-

**प्रत्यभिज्ञाज्ञानं**-तत्तेदन्तावगाहिज्ञानम् १ संस्कारेन्द्रियसंप्रयोगोभयजन्यं ज्ञानम्, यथा सोऽयं देवदत्त इति ॥ १९२८ ॥

**प्रत्ययः**-विश्वासः*१ प्रकृतिम(मुद्दिश्य)त्रधीकृत्य विधीयमानः स्वार्थबोधकः शब्दविशेषः २ धातुप्रातिपदिकान्यतरनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वं प्रत्ययत्वम् ॥ १९३२ ॥

**प्रत्यवायत्वं**-विध्युल्लङ्घनजन्यत्वम् १ आगामिदुःखजनकत्वं वा

**प्रत्याहारः**-इन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानम् १९३५

**प्रत्युत्तरं**-प्रतिपक्ष्युच्चरितनिराकरणसमर्थवाक्यम् ॥१९३६॥
**प्रथमत्वं**-पूर्वज्ञानविषयत्वम् *१ स्वापेक्षापूर्वरहितत्वम्१९३८
**प्रथमाविभक्तित्वं**-सङ्केतविशेषसम्बन्धेन प्रथमापदवत्त्वम्।
**प्रदक्षिणं**-दक्षिणावर्त्तेन देवमुद्दिश्य भ्रमणम् ॥ १९४० ॥
**प्रधानं**-सत्त्वरजस्तमोगुणसाम्यावस्था १ 'प्रकृति'लक्षणमप्य त्र०
**प्रध्वंसाभावः**-जन्यत्वे सत्यविनाश्यभावः १ अविनाशित्वे सति प्रतियोगिस(त्तोत्तरकालिकाभावः २)मवायिमात्रवृत्त्यभावः। सामयिकाभावादिवारणाय **सत्यन्तम्**,अन्योन्याभाववारणाय मात्रेति
**प्रपञ्चः**-चिद्भिन्नत्वम् १ परिच्छिन्नत्वं प्रपञ्चसामान्यं लक्षणम् २ वैप-
**प्रबन्धत्वं**-सङ्घटितनानावाक्यसमुदायत्वम्। [रीत्यं
**प्रमा**-अविसंवादिज्ञानमिति बौद्धाः १ अव्यभिचार्यनुभव इति भाट्टाः २ प्रमाणजन्यं ज्ञानमिति नै० ३ अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुरिति सां० ४ बोधेद्धा[1] वृत्तिर्वृत्तीद्धबोधो[2] वा ५ स्मृतिभिन्नत्वे सत्यबाधितार्थगोचरज्ञानम् ॥ १९५४ ॥
**प्रमाणं**-प्रमीयतेनेनेति १ सम्यग्ज्ञानमिति जैनाः २ प्रमाकरणम्। छिदादिकरणकुठारादावतिव्याप्तिवारणाय **मा** पदम् ,भ्रमज्ञानकरणदुष्टचक्षुरादावतिव्याप्तिवारणाय **प्र** पदम् , प्रमाप्रमाणमित्युक्तेऽसंभवः स्यादतः **करण**मित्युक्तम् ३ व्यापारवत्तासंबन्धेन प्रमितिविभाजकोपाध्यवच्छिन्नासाधारणकारणम्। चा-

---

१ बोधेनेद्धा प्रकाशिता वृत्तिः। २ वृत्तौ प्रतिबिम्बितं चैतन्यम्।

क्षुषादिप्रमित्यसाधारणकारणे विषयेन्द्रियसंबन्धादौ व्यापारेऽतिव्याप्तिवारणाय **व्यापारवत्तासम्बन्धेने**ति, अन्यप्रमाणस्यान्यप्रमाणत्वापत्तिवारणाय **विभाजकोपाध्यवच्छिन्ने**ति, चाक्षुषादावपि व्यापारवत्तासंबन्धेन मनसः कारणत्वात्तत्रातिव्याप्तिवारणायासाधारणेति ४ असंदिग्धाविपरीतानधिगतविषयकबोधरूपप्रमाकरणम्। संशयविपर्ययस्मृतिकरणेष्वतिप्रसङ्गवारणायोपात्तं बोधरूपप्रमांशे क्रमशो विशेषणत्रयमिति योगिनः ५ अगृहीतग्राहिज्ञानकरणमिति मी० ६ अज्ञातार्थज्ञापकम् ७ दोषासहकृतज्ञानकरणमित्यद्वैतसिद्धौ ८ संवादिप्रवृत्तिजननयोग्यज्ञानजनकमिति **ब्रह्मविद्याभरणे** ९ साधनाश्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तत्वं प्रमाणत्वम् १९६४

**प्रमाणगतविपरीतभावना**-श्रुतीनामहेयानुपादेयब्रह्मप्रतिपादकत्वे निष्फलत्वप्रसङ्गाच्छ्रुतयः कर्मपरा एवेति निश्चयात्मिका चित्तवृत्तिः ॥ १९६५ ॥

**प्रमाणगतासंभावना**-प्रमाणगोचरसंभावनाविरहः १ ब्रह्मणो घटादिवत्सिद्धत्वेन मानान्तरगम्यत्वाच्छ्रुतिस्तत्प्रतिपादिका कथं भवेत्? फलाभावान्न भवेदेवेत्याकारिका चित्तवृत्तिः ॥१९६९॥

**प्रमाणचैतन्यं**-अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यम्॥१९६८॥

**प्रमाता**-प्रमाश्रयः १ प्रमाणैर्योऽर्थं प्रमिणोति सः ॥१९७०॥

**प्रमातृचैतन्यं**-अन्तःकरण(ावच्छिन्नचैतन्यम् १)विशिष्टचैतन्यं

**प्रमादः**-कर्तव्येऽकर्तव्यत्वधिया ततो निवृत्तिः १ अकर्तव्ये कर्तव्यत्वधिया तत्र प्रवृत्तिर्वा २ प्रयत्नेन कर्तव्ये कार्ये विस्मृतिः

**प्रमेयत्वम्**-अवधार्यम् * १ प्रमाविषयत्वम् ॥ १९७७ ॥

**प्रमेयगतविपरीतभावना**-योग्यं योग्येन संबद्ध्यते इति न्यायात्त्रिगुणात्मकप्रपञ्चोपादानं त्रिगुणात्मिका मायैव न ब्रह्मेति निश्चयात्मिका चित्तवृत्तिः ॥ १९७८ ॥

**प्रमेयगतासंभावना**-प्रमेयगोचरसंभावनाविरहः १ ब्रह्मणस्सच्चिदानन्दरूपिणोऽनृतजडदुःखात्मकप्रपञ्चविलक्षणत्वेन तत्कारणत्वं कथं भवेत् ? न भवेदेवेत्याकारिका चित्तवृत्तिः १९८०

**प्रमेयचैतन्यं- विषयचैतन्यं** } विषयप्रकाशकं विषयाधिष्ठानभूतं चैतन्यम् १ अज्ञातं घटाद्यवच्छिन्नं चैतन्यमिति ग्रं० ।

**प्रयत्नः**-करोमीत्यनुभवविषयवृत्तिगुणत्वव्याप्यजातिमान्१९८२

**प्रयोगः**-शब्दादीनामुच्चारणम्*१शस्त्रादिमोचनम् ॥१९८४॥

**प्रयोगविधिः**-साङ्गे कर्मण्यनुष्ठापको विधिः १ प्रयोगाशुभावबोधको विधिः । [भृत्यादीन्प्रयुनक्ति

**प्रयोजकः**-अनुष्ठापकः १साक्षात्परम्परया वा कारणम्२कार्यादौ-

**प्रयोजनं**-यमर्थमधिकृत्य प्रवर्तते १ प्रवृत्तिहेत्विच्छाविषयः। ज्ञानसुखत्वादिवारणार्थं **प्रवृत्तिहेत्विति** २ बुद्धिविषयत्वे सति स्वसंबन्धितयेच्छाविषयत्वं प्रयोजनत्वम् ॥ १९९१ ॥

**प्रयोज्यं**-प्रयोक्तुं शक्यम् * १ साक्षात्परम्परया वा जन्यम् ।

**प्रलयः**—त्रैलोक्यनाशः १सकलभावकार्यविनाश इति ग्रं० २भूतादिलयाधारकालः ३स नित्यनैमित्तिकदैनन्दिनमहात्यन्तिकरूपः

**प्रलापः**—व्यर्थालाभः १निष्प्रयोजनानर्थकवाक्यम् ॥ १९९८ ॥

**प्रवचनं**-प्रकृष्टवाक्यम्१अर्थानुसंधानपूर्वककथनं वा ॥२०००॥

**प्रवर्तकं**—इष्टसाधनताविषयकं कृतिसाध्यतज्ज्ञानम् १ स्वविशेषणवत्ताप्रतिसंधानजन्यं कार्यताज्ञानमिति गुरवः २ अन्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वं प्रवर्तकत्वम् ॥२००४॥

**प्रवर्तना**—प्रवृत्त्यनुकूलो व्यापारः ॥ २००५ ॥

**प्रवृत्तिः**—शब्दानामर्थबोधनशक्तिः * १ स्वस्वविषये इन्द्रियादीनां सञ्चारः २ रागजन्य। रागविषयको गुणः ॥२००८॥

**प्रशंसा**—गुणाविष्क ( रणम् १ ) ारेण स्तुतिः ॥ २०१० ॥

**प्रश्नः**—जिज्ञासाविष्करणम् १ अविज्ञातार्थज्ञानार्थमिच्छाप्रयोज्यवाक्यमिति ग्रं० २ प्रतिवचनानन्तरमाक्षेपोत्थानम् ॥२०१३॥

**प्रश्वासः**—कोष्ठ्यवायोर्बहिर्निःसारणम् ॥ २०१४ ॥

**प्रसङ्ख्यानं**—सत्यज्ञानम् * १ शब्दयुक्तिप्रत्ययानामावृत्तिः ।

**प्रसङ्गः**—प्रकृष्टसङ्गः १ लक्ष्ये लक्षणसंबन्धः * २ अन्योद्देशेऽन्यसिद्धिः ३ निरूपणयोग्यत्वम् ॥ २०२० ॥

**प्रसङ्गसङ्गतिः**—स्मृतस्योपेक्षानर्हत्वम् १ उपोद्घातादिभिन्नत्वे सत्यनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वम् २०२२

**प्रसिद्धत्वं**—विख्यातत्वम् १ अनेकज्ञानविषयत्वं वा ॥२०२४॥

**प्रस्तावना**-ग्रन्थावतारणार्थव्याख्यानांशः १ अमुख्यार्थप्रतिपादकत्वे सति मुख्यार्थ (सूचकत्वम् २) प्रवर्तकत्वं प्रस्तावनात्वम्

**प्रहेलिका**-दुर्विज्ञानार्थप्रश्नः १ 'दृष्टकूट' लक्षणमप्यत्र पठनीयम्

**प्राकृतप्रलयः**-कार्यब्रह्मविनाशनिमित्तकः सकलकार्यविनाशः।

**प्रागभावः**-पूर्ववृत्त्यभावः १ अजन्यत्वे सति विनाश्यभावः। घटादिवारणाय **सत्यन्तम्**, परमाणुवारणाय **विनाशी**ति २ कार्यसमवायिकालान्यावृत्तित्वे सति कार्योत्पत्तिपूर्वकालीनाभावः। ध्वंसेऽतिव्याप्तिवारणाय **कार्योत्पत्तिपूर्वकालीने**ति २०३२

**प्राग्लोपः**-उत्तरोत्तरेणैव पूर्वपूर्वकार्यसंभवे पूर्वेषामन्यथासिद्धिः

**प्राज्ञः**-सुषुप्तौ विलीनेऽन्तःकरणेऽज्ञानमात्रसाक्षी १ व्यष्टिकारणशरीरमात्रोपहितं चैतन्यमिति ग्रं० २ प्रकर्षेण जानातीति २०३६

**प्राणः**-शरीरान्तःसञ्चारी वायुः। महावाय्वादावतिव्याप्तिवारणाय विशेषणम्, मन आदिवारणाय विशेष्यम्, धनञ्जयवारणाय **सञ्चारी**ति १ प्राग्गमनशीलत्वे सति नासाग्रस्थानवान् २ मिलितसमस्तापञ्चीकृतपञ्चमहाभूतराजसांशकार्यत्वे सति क्रियाशक्तिप्रधानं

**प्राणमयकोशः**-कर्मेन्द्रियैः सहितः प्राणः ॥ २०४० ॥

**प्राणायामः**-प्राणवृत्तिनिरोधः १ निःश्वासोच्छ्वासयोर्गतिविच्छेदकारकव्यापारः २ रेचकपूरककुम्भकलक्षणः प्राणनिग्रहोपायः

**प्रातिपदिकत्वं**-धातुप्रत्ययप्रत्ययान्तभिन्नत्वे सत्यर्थवत्त्वम् * १ विभक्त्यर्थशून्यत्वे सति व्यक्तिमात्रार्थवत्त्वम् ॥ २०४५ ॥

**प्रातिभासिकः**-प्रतिभासकाले भवः १ ब्रह्मज्ञानं विना बाध्यमान इति ग्रं० २ अध्यासकाले भासमानत्वे सत्यध्यासभिन्नकालेऽभासमानः ३ आगन्तुकदोषसहकृताविद्याकार्यत्वम् ॥ २०४८ ॥

**प्रादुर्भावः**–प्रथमप्रकाशः १ पूर्वरूपरसादिनाशपूर्वकं रूपरसाद्यन्यतमोत्पत्तिः ॥ २०५१ ॥

**प्रामाण्यं** तद्वति तत्प्रकारकत्वम् १ अबाधिताज्ञातार्थज्ञापकत्वम्

**प्रायश्चित्तं**-पापक्षयमात्रसाधनं कर्म, यथा कृच्छ्रचान्द्रायणादि। मात्रशब्दात्तुलापुरुषाश्वमेधादिव्यावृत्तिः १ प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते, तपो निश्चयसंयुक्तं प्रायश्चित्तं तदुच्यते

**प्रारब्धकर्म**–वर्तमानशरीरारम्भकं कर्म १ प्रारब्धकार्यं सुखदुःखादिरूपं युगकल्पादिपर्यन्तमनुभोक्तव्यं येन तत् २०५७

**प्रार्थना** नम्रताज(सूच)नकवाक्यम् * १ उत्कर्षप्रतिपादनेच्छा।

**प्रीतिः**–इष्टे वस्तुनि मनसोभिनिवेशः १ दयारसार्द्रान्तःकरणवृत्तिः

**प्रेयः**–अतिशयप्रियम् * १ देवगुरुमित्रादिविषयः प्रीतिप्रकर्षः।

**प्रेरकः**–तदनुकूलप्रयत्नाधारः १ प्रवृत्त्यनुकूलव्यापाराश्रयो वा।

**प्रेरणं**-प्रयोजकव्यापारः १ स्वाभिलषितोपायाज्ञानादप्रवृत्तापकृष्टप्रयोज्यस्योपायविषयकप्रवृत्त्यनुकूलो व्यापार इति सारदर्पणे

**प्रैषः**–प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना ॥ २०६७॥

**प्रौढिवादः**-स्वबुद्ध्युत्कर्षप्रदर्शनार्थमनभिमतार्थकथनम् १ उत्कर्षस्याहतावुत्कर्षहेतुत्वकल्पनमिति ग्रं० ॥ २०६८ ॥



**फलं**-प्रकरणप्रतिपाद्यस्य श्रूयमाणं तज्ज्ञानात्तत्प्राप्तिप्रयोजनम्, यथा अथ सम्पत्स्य इत्यद्वितीयज्ञानात्तत्संपत्तिरूपं फलम् १ ससाधनसुखदुःखोपभोगः २ व्यापारजन्यत्वं फलत्वम् ३ स्वकर्तव्यताप्रयोजकेच्छाविषयत्वम्। [भिव्यक्तं चैतन्यं

**फलचैतन्यं**-ज्ञातं घटाद्यवच्छिन्नं चैतन्यम् १ अन्तःकरणवृत्त्य-

**फलव्याप्तिः**- } स्वाकारवृत्तिप्रतिबिम्बितचैतन्यविषयत्वम् १

**फलव्याप्यत्वं** } वृत्तिबिम्बितचिदभिव्यक्तचैतन्याश्रयत्वम्।

**फलोपकार्यङ्गं**-यागाङ्गद्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म १ स्वव्यापारातिरिक्तव्यवधानराहित्येन प्रधानोपकारकम्, यथा प्रयाजादि अदृष्टरूपेण स्वव्यापारमात्रेण प्रधानयागस्य २०८२

**फलोपधायकत्वं**-कार्याव्यवहितपूर्ववृत्तित्वसम्बन्धेन फलविशिष्टत्वम्, यथा कुलालहस्तस्थदण्डे ॥ २०८३ ॥



**बन्धः**-आत्मनोऽज्ञानतत्कार्यसम्बन्धः १ सत्यत्वेन ज्ञायमानो दृश्यसंबन्धः * २ अणिमाद्यष्टैश्वर्याशासिद्धसङ्कल्पः ३ देवमनुष्याद्युपासनाकामसङ्कल्पो वा ४ यमाद्यष्टाङ्गयोगसङ्कल्पो वा ५ वर्णाश्रमधर्मकर्मसङ्कल्पो वा ६ यागव्रततपोदानविधिविधानज्ञानसंभवः *७केवलमोक्षापेक्षासङ्कल्पः ८ सङ्कल्पमात्रसंभवो वा।

**बन्धुः**-संबन्धेनोपकर्ता १ विच्छेदासह्यक इति प्रं० ॥२०९३॥

**बलं**-साधनसामग्री १ विचित्रकार्यानुकूलशक्तिर्वा ॥२०९५॥
**बलवत्त्वं**-बलविशिष्टत्वम् १ कार्यसिद्धिप्राक्कालिकप्रासिकर्तृत्वम् ।
**बहिरङ्गं**-परनिमित्तकम् १ बहिः प्रकृतेर्बाह्यमङ्गं यस्य २०९९
**बहिर्मुखं**-बहिः बाह्यविषये मुखं प्रवणता यस्य ॥ २१०० ॥
**बहुव्रीहिसमासः**-अन्यपदार्थप्रधानः समासः २ संबन्धिलाक्षणिकत्वव्याप्योत्तरपदकसमासः ॥ २१०२ ॥
**बहूदकः**-बहूनि उदकानि शौचाङ्गतया यस्य ॥ २१०३ ॥
**बाधः**-अर्थासङ्गतिः *१ अपरोक्षमिथ्यात्वनिश्चयः २सविलासाविद्यानिवृत्तिरिति ग्रं० ३प्रतीतार्थं परित्यज्यान्यार्थकल्पनमित्यद्वैतदीपिकायाम् ४ पूर्वप्रत्ययस्य व्यधिकरणप्रकारकत्वनिश्चयः ५ पक्षनि (ष्ठः साध्याभावः ६) ष्ठप्रमाविषयत्वप्रकाराभावप्रतियोगिसाध्यक इति नै० ॥ २१११ ॥
**बाधसामानाधिकरण्यं**-अन्यतरस्य बाधेन सामानाधिकरण्यम्, यथाऽभासवादिमतेऽन्तःकरणप्रतिबिम्बितस्य जीवस्य बाधेन ब्रह्मणा सामानाधिकरण्यम्(=अभेदः), यथा वा जगतो बाधेन 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुत्युक्तं जगतो ब्रह्मणा सामा०
**बालः**-शास्त्रार्थज्ञानविवेकशून्यः १अधीतकाव्यकोशव्याकरणानधीतवेदान्तशास्त्रः । कणादादावतिव्याप्तिवारणायानधीतवेदान्तेति, स्तनन्धयेऽतिप्रसक्तिवारणायाधीतकाव्येति ।
**बिम्बत्वं**-उपाधिनिमित्तस्वप्रतियोगिकव्याप्यवृत्तिभेदाश्रयत्वे

सति औपाधिकपरिच्छेदरहितत्वमिति सङ्क्षेपशारीरके १ उपाध्यनन्तर्गतत्वे सत्युपाध्यन्तर्गतरूपाभिन्नबहिःस्थितत्वम्।

**बुद्धिः**-निश्चयात्मिकान्तःकरणवृत्तिः *१ जानामीत्यनुव्यवसा-[यविषयगुणः

**बृंहणत्वं**-शरीरवृद्ध्यादिहेतुत्वम्।

**बौद्धः**-बुद्धितत्त्वे व्यवस्थितः १ बुद्धमतावलम्बित्वं बौद्धत्वम्।

**ब्रह्म**-निरवच्छिन्नचैतन्यम् १ निखिलनामरूपात्मकप्रपञ्चाकारेण परिणममानमायाधिष्ठानमिति ग्रं० २ बृहत्त्वं बृंहणत्वं वा।

**ब्रह्मचर्यं**-उपस्थसंयमः १ अष्टाङ्गमैथुनवर्जनम् २ कायेन मनसा वाचा सर्वावस्थासु सर्वदा, सर्वत्र मैथुनत्यागो ब्रह्मचर्यं प्रचक्षते

**ब्रह्मज्ञानं**-त्रिगुणावच्छिन्नातीततुरीयशुद्धचैतन्यविषयकज्ञानम्

**ब्रह्मणस्तटस्थलक्षणं**-उत्पत्तिस्थितिलयकारणत्वम् १ भूतोपादानत्वे सति कर्तृत्वम्। कुलालादावतिव्याप्तिपरिहाराय **भूते**-ति, मायायामतिव्याप्तिनिवृत्तये **कर्त्रि**ति २ निखिलजग(दुपादानगोचरापरोक्षज्ञानचिकीर्षाकृत्याश्रयत्वम् ३ ) दभिन्ननिमित्तोपादानत्वम्। शुक्त्यवच्छिन्नचैतन्येऽतिव्याप्तिवारणाय **नि**-

१ स्त्रिया दर्शनं(=रागपूर्वकं स्त्र्यादिविषयकज्ञानम् १) स्पर्शनं (=रागपूर्वकं क्रियाविशेषजन्यं ज्ञानम् २)केलिः(रागपूर्वकः परिहासादिव्यवहारः ३) कीर्तनं(=स्त्र्यादेरनुरागपूर्वकं सौंदर्यादिवर्णनम् ४) गुह्यभाषणं(=रागपूर्वकं रहसि संभाषणम् ५) सङ्कल्पः(=इयं मे स्यादिति ६)अध्यवसायः(=अनया 'रंस्ये' रमिष्ये इति निश्चयः ७)क्रियानिर्वृत्तिः(=सुरतसिद्धिरनुभवविशेषो वा ८)चेत्यष्टौ मैथुनस्याङ्गानि

खिलेति, असंभववारणाय जगदेति ४ 'ईश्वर'लक्षणमप्यत्र प०

**ब्रह्मनिष्ठत्वम्**-वेदान्तवेद्यब्रह्मात्मनावस्थितत्वम् ॥ २१३३ ॥

**ब्रह्मविद्यात्वं**-जगन्मिथ्यात्वबोधकत्वे सति स्वस्वरूपनिश्चायकत्वं

**ब्रह्मा**-सत्त्वोपसर्जनभूतरजोगुणावच्छिन्नचैतन्यम् ॥ २१३५ ॥

**ब्रह्माण्डं**-ब्रह्मणो जगत्स्रष्टु(ः कारणीभूतमं)रण्डम् १ स्वावरण-भूतलोकालोकपर्वततद्बाह्यपृथिवीतद्बाह्यसमुद्रैः सहितो देशः ।

**ब्रह्मानन्दः**-द्वैतभानाभावविशिष्टनिद्राऽभावकालीनब्रह्माभिमुखवृत्त्यभिव्यङ्ग्य आनन्दः १ ब्रह्मण आनन्दः ॥ २१३९ ॥

**ब्राह्मणः**-नैसर्गिकशमादिनवसाधनसंपन्नः १ ब्राह्मणेतरावृत्तित्वे सति सकलब्राह्मणव्यक्तिवृत्तित्वम् २ तपःश्रुतञ्च योनिश्च ह्येतद्ब्राह्मणकारणम्, तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ।

**ब्राह्मणभागः**-कर्मविधायकवाक्यम् १ मन्त्रतात्पर्यार्थप्रकाशको वेदभाग इत्यृग्वेदभाष्ये २ वेदत्वे सति मन्त्रभिन्नत्वं ब्राह्मणभागत्वम् । कल्पसूत्रादिवारणाय सत्यन्तम् ॥ २१३४ ॥



**भक्तिः**-आराध्य(त्वेन ज्ञानम् १) विष(यिकासक्तिः २)यकराग-

**भक्षणं**-गलबिलाधस्संयोगानुकूलो व्यापारः । [विशेषः

**भयं**-परतोनिष्टसंभावना १ आगामिदुःखानुसंधानजन्यमानसोद्वेग इति ग्रं० २ विषयविशेषदर्शनश्रवणनिबन्धनश्चेतसोऽनवस्थानं

**भागत्यागलक्षणा**-शक्यैकदेशपरित्यागेनैकदेशे वृत्तिः, यथा

तत्त्वमसीत्यादिवाक्ये सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धांशपरित्यागेन चिन्मात्रयोरभेदः १ शक्यतावच्छेदकपरित्यागेन व्यक्तिमात्रबोधप्रयोजिका लक्षणा ॥ २१५४ ॥

**भारतं**-भरतवंश्यानधिकृत्य कृतो लक्षश्लोकात्मको ग्रन्थः २१५५

**भारतवर्षम्**-उत्तरेण समुद्रस्य हिमाद्रेश्चैव दक्षिणे, वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ॥ २१५६ ॥

**भावः**-अन्तर्निगूढेच्छा * १ क्रियानिर्वर्त्त्यो योऽर्थः क्रियैव वा २ क्रियायाः फलम्, यथा ओदनं पचति देवदत्तः ३ अपरिस्पन्दनसाधनसाध्यो धात्वर्थ इति ग्रं० ४ प्रतियोगिनिरूपणानपेक्षनिरूपणकः ५ समवायैकार्थसमवायान्यतरसंबन्धेन सत्तावानिति नै० ६ विधिमुखप्रतीतिविषय इति वे० । [पारः

**भावना**-फलानुकूलव्यापारः १ भवितुर्भवनानुकूलो भावयितुर्व्या-

**भावनासंस्कारः**-जन्यज्ञानजन्यसंस्कार इति नवीनाः १ पूर्वानुभवजन्यः स्मृतिहेतुः संस्कारः । आत्मादिवारणाय प्रथमदलम्, अनुभवध्वंसवारणाय द्वितीयदलम् ॥ २१७७ ॥

**भाविकालः** } **भविष्यत्त्वं**- } सूर्यपरिस्पन्दादिक्रियाप्रागभावावच्छिन्नः कालः १ वर्तमानप्रागभावप्रतियोगित्वम् २१७१

**भाषणम्**-यत्कि (ञ्चिज्) ज्ञानानुकूलशब्दप्रयोगः ॥ २१७२ ॥

**भाषा**-प्रतिज्ञासूचिका १ तत्तद्देशस्थजनवर्तननिर्वाहकवाक्यमिति ग्रं० २ मनोभावव्यञ्जकोवर्णात्मकः शब्दः ३ भाष्यतेऽनयेति

**भाष्यं**-सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः, स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः। सागरादिवर्णनस्य भाष्यत्वव्यावृत्तये **सूत्रार्थे**ति, पदवृत्तिव्यावृत्तये **वाक्यैरि**ति, वार्त्तिकस्य तत्त्वनिरासाय **सूत्रानुसारी**ति, वृत्तेस्तत्त्वव्यावृत्त्यर्थं **स्वपदानी**ति पाराशरपुराणे २१७७

**भिक्षा**-ग्रासमात्रं(ान्नम्१)भवेद्भिक्षा पुष्कलन्तु चतुर्गुणम्, पुष्कलानि च चत्वारि हन्तकारो विधीयते २ अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनाम्, द्वात्रिंशत्तु गृहस्थस्य यथेष्टं ब्रह्मचारिणां

**भिक्षुः**-भिक्ष(ते इति १)ोपजीवी २ भिक्ष(णशीलः ३)ाकारको वा ४ चतुर्थाश्रमी ५ यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः, अध्वगः क्षीणवृत्तिश्च षडेते भिक्षवः स्मृताः।

**भिन्नत्वं**-प्रस्फुटितत्वम् * १ भेदा(धिकरणत्वम् २)नुयोगित्वम्।

**भूतत्वं**-बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम्। आत्मन्यतिव्याप्तिवारणाय **बहिः**पदम्, कालादावतिव्याप्तिवारणाय **विशेषे**ति, द्रव्यत्ववारणाय **गुणे**ति १ अन्यतत्त्वानुसन्धानकालत्वम् २११९१

**भूतकालः**-प्रारब्धपरिसमाप्तक्रियाश्रयः १ सूर्यपरिस्पन्दादिक्रियाध्वंसावच्छिन्नः कालः २ वर्तमानध्वंसप्रतियोगी ॥२१९४॥

**भूतप्रतिबन्धः**-पूर्वानुभूतविषयस्यावशेन पुनः पुनः स्मरणम्

**भूतार्थवादः**-तत्काले तद्गुणज्ञापकः शब्दः, यथा 'जरायाम-

प्ययं शूर' इति १ प्रमाणान्तर (परिप्राप्तार्थाभिधायित्वम् २) वि-रोधतत्प्राप्तिरहितार्थबोधकोऽर्थवादः, यथा इन्द्रो वृत्राय वज्रमुदयच्छदित्यादिः ॥ २१९८ ॥

**भूमिका**-वेशान्तरपरिग्रहः ❀ १ ग्रन्थाभासः २ प्रयोजनसंपादिका युक्तिः ❀ अन्यरूपेऽन्यप्रवेश इति नाटकज्ञाः ४ चित्तस्यावस्थावि-शेष इति योगिनः ५ हर्म्यादेरुत्तरोत्तरभूमिवज्ज्ञानस्यावस्थाविशेषः

**भेदः**-विदारणम् १ पृथक्करणमिति प्रं० २ अन्योन्याभावत्वं भेदत्वं

**भेदकः**-मैत्रीनाशकः * १ विदारणानुकूलव्यापाराश्रयः २२०७

**भेदाभावः**-मानाभावादयुक्तेश्च न भिदेश्वरजीवयोः, जीवा-नामचितां चैव नात्मनो न परस्परमिति भेदधिक्कारे ।

**भोक्ता**-सुखदुःखाकारवृत्त्युपहितं चैतन्यम् ॥ २२०८ ॥

**भोगः**-विभवभेदः * १ सुखदुःखान्यतरसाक्षात्कारः ॥ २२१० ॥

**भोग्यं**-सुखदुःखान्यतरसाक्षात्कारिज्ञानविषयः (=सुखादिः) ।

**भोजनम्**-कठिनद्रव्यस्य गलबिलाधःसंयोजनम् ॥ २२१२ ॥

**भ्रमः**-विपरीतनिर्णयः * १ विसंवादिज्ञानम् २ अतस्मिंस्त-(द्ग्रहः ३) द्बुद्धिरिति प्रं० ४ निष्फलप्रवृत्तिजनको बोधः ॥ २२१७ ॥

## ❋ म ❋

**मङ्गलं**-अभीष्टार्थसिद्धिः १ विघ्नविनाशनानुकूलव्यापारविशिष्टत्वं मङ्गलत्वम् २ समाप्तिप्रतिबन्धकीभूतदुरितविशेषविघातकत्वम्

**मतं**-संमतम् १ अभिप्रेतज्ञानं वा २ निषेधवाचकशब्दः ॥ २२२३ ॥

**मत्सरः**-आत्मधिकारविशेषः ॐ १परोत्कर्षासहनपूर्वकस्वोत्कर्ष-वाञ्छा २स्वसमानसंपत्तिदर्शनासहनत्वं मत्सरत्वम् ॥२२२६॥
**मदः**-मत्सदृशः कोऽस्तीति (गर्वविशेषः १) हर्षबुद्धिः २ विद्या-दिनिमित्तात्स्वस्मिन्नाधिक्यबुद्धिः । [लात्मा शब्दः
**मध्यमावाणी**-हृच्चकस्थवाग्व्भिव्यङ्ग्यः पश्यन्त्या अपि स्थू-
**मध्यस्थः**-विवदमानयोः(रुभयोरपि पक्षपाती हितैषी वा१)सद-सद्वाक्यविचारकः २स्वार्थरक्षापूर्वकपरार्थसाधकत्वं मध्यस्थत्वं
**मनः**-मननात्१सर्वेन्द्रियप्रवर्तकान्तरिन्द्रियम्*२सङ्कल्पविकल्पा-त्मकवृत्तिमदन्तःकरणम्३सुखदुःखादिसाक्षात्कारकारणत्वे सती-न्द्रियत्वं मनस्त्वम्। चक्षुरादिवारणाय सत्यन्तम्,आत्ममनःसं-योगादिवारणायेन्द्रियमिति४स्पर्शरहितत्वे सति क्रियावत्त्वम्५ द्रव्यसमवायिकारणत्वरहिताणुसमवेतद्रव्यत्वापरजातिमत्त्वम्।
**मननं**-साधकबाधकप्रमाण(ाभ्यां श्रुतितात्पर्यनिर्णयः१) ोपन्या-सरूपयुक्तिभिः श्रुतिवाक्यार्थसमर्थनम्*२ श्रुतार्थ(स्य युक्तायुक्त-त्वपर्यालोचनम्३)निश्चयानुकूलप्रमेयसंदेहनिवर्तकयुक्त्यनुसंधानं
**मनुष्यः**-मनोरपत्यम् । [कारपरिणामः
**मनोनाशः**-मनसो नाशः १ वृत्तिरूपपरिणामत्यागेन निरोधा-
**मनोमयः**-मनोऽतिरिक्तोपाधिशून्यः ॥ २२४६ ॥
**मनोमयकोशः**-ज्ञानेन्द्रियैः सहितं मनः ॥ २२४७ ॥
**मनोव्यसनम्**-चौर्यादीच्छाहेतुभूतं व्यसनम् ॥२२४८॥

**मनोहरः**-मनसो हरः १ यस्मिन्सक्तं मनः पुंसां नान्येन ह्रियते मनः, अन्येभ्यो यच्च हरति तन्मनोहरमुच्यते २२५०

**मन्त्रः**-गुप्तभाषणम् *१ प्रयोगसमवेतार्थस्मारको वाक्यविशेषः२ अनुष्ठानकारणभूतद्रव्यदेवताप्रकाशकः३वेदत्वे सति ब्राह्मणभि-

**मन्त्रभागः**-मन्त्रविधानप्रतिपादको वेदभागः । [न्नत्वं

**मन्दप्रज्ञत्वम्**-श्रुतार्थग्रहणधारणापटुत्वम् ॥ २२५६ ॥

**मन्दवैराग्यं**-पुत्रदारादिविषयवियोगे धिक्संसारमितिबुद्ध्या विषयजिहासा । [न्द्रियवियोगः

**मरणावस्था**-चरमशरीरप्राणसंयोगध्वंसः १ पूर्वविद्यमानदेहे-

**मर्यादा**-न्याय्यपथस्थितिः १स्थित्यनतिक्रम इति ग्रं०॥२२६१॥

**मलमासः**-रविसङ्क्रान्त्यभावविशिष्टचान्द्रमासः॥ २२६२ ॥

**मलिनवासना**-ज्ञानप्रतिबन्धकीभूता वासना ॥ २२६३ ॥

**महत्त्वम्**-प्रमाणागम्यशरीरकत्वम् १ महतो भावः ॥२२६५॥

**महात्मा**-परोपकारव्यसनी१अहेतुकहितकारको वा २ महानात्मा स्वभावो यस्य । [श्चासौ पुरुषश्चेति

**महापुरुषः**-महान् कामादिभिरक्षुभितमानसः पुरुषः १ महां-

**महाप्रकरणं**-फलभावनायाः प्रकरणम् १मुख्यभावनासंबन्धित्वं

**महाप्रलयः**-सर्वभावकार्यध्वंसः१जन्यभावानधिकरणकालः २ ब्रह्मणो नाशावस्थेति पौराणिकाः ३'प्राकृतप्रलय'लक्षणमप्यत्र०

**महाभारतं**-महान्तं भारं तनोतीति *१ महद्भारतम् २ महत्त्वे

सति भारतम् ३ 'भारत' लक्षणमप्यत्र पठनीयम् ॥२२७८॥

**महामोहः**-ग्राम्यभोगसुखैषणा *१ साधनरहितस्यापि सर्वसुखजातीयं मे भूयादिति विपर्ययविशेषः ॥ २२८० ॥

**महावाक्यं**-महद्वाक्यम् १परस्परसंबद्धार्थकवाक्यम्२वाक्यसमुदायरूपत्वे सत्येकवाक्यमिति मी० ३ जीवब्रह्मैक्यबोधकवाक्यं

**महाविद्यानुमानत्वं**-पक्षे प्रकारान्तरेण साध्योपसंहारशालित्वे सति दृष्टान्ते प्रकारान्तरेण साध्योपसंहारशालित्वम् ।

**मात्रा**-ह्रस्ववर्णोच्चारणकालः *१ स्वजानुमण्डल पाणिना त्रिःपरामृश्यच्छोटिकावच्छिन्नः कालः ॥ २२८७ ॥

**मानसजपः**-जिह्वौष्ठादिव्यापाररहितं शब्दार्थयोश्चिन्तनम् ।

**मानः**-पुरुषान्तरेण संपादितः सत्कारः१सर्वत्राप्रणतिभावः२२९०

**मानित्वं**-विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघनम् ॥२२९१

**माया**-परवञ्चनेच्छा १ हृदयेन्यथा कृत्वा बहिरन्यथा व्यवहरणम्‌* २रजस्तमोनभिभूतशुद्धसत्त्वप्रधाना* ३अघटितघटिका शक्तिः ४ निरूपयितुमशक्यत्वे सति विस्पष्टं भासमाना । आत्मन्यतिव्याप्तिवारणाय सत्यन्तम् ५ स्वाश्रयाव्यामोहकरत्वे सतीतरव्यामोहकारणत्वं मायात्वम् ६ विपरीतप्रवृत्तिहेतुत्वे सति विषयोपादानत्वे सति विक्षेपशक्तिप्रधानत्वम् ॥ २२९८ ॥

**मित्रम्**-मिनोति मानं करोतीति १ प्रत्युपकारमनपेक्ष्य स्नेहेनोपकारकः २ सर्वविषयेष्वेककार्यकर्तेति प्रं० ॥ २३०१ ॥

**मिथ्यात्वं**-निःस्वरूपत्वमिति बौद्धाः १कालासम्बन्धित्वमिति नै० २ ज्ञानबाध्यत्वमिति विवरणे ३ अध्यासविषयत्वम् ४ ब्रह्मभिन्नत्वमिति परिमले ५ प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्। असद्व्यावर्तनाय **प्रतिपन्नोपाधावि**ति विशेषणम्, प्रागभावादिप्रतियोगित्वमादायांशतः सिद्धसाधनवारणाय **त्रैकालिके**ति ६ ज्ञाननिवर्त्यत्वे सति ज्ञाना (तिरिक्तानिवर्त्यत्वम् ७) घटितसामग्र्यनिवर्त्यत्वम्। आत्मन्यतिव्याप्तिवारणाय **सत्यन्तम्**, घटं नाशयामीति ज्ञानपूर्वकं मुद्गरपातादिना तन्नाशदर्शनात्तद्वारणाय विशेष्यम् ८ असत्त्वाविशेषेपि कदाचित्प्रतीयमानत्वम्। गगनकमलादावतिव्याप्तिवारणाय **कदाचि**दिति मुक्तावल्याम् ९ स्वानधिकरणानधिकरणात्यन्ताभावप्रतियोगित्वमिति तत्त्वविवेके १० स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यन्ताभावप्रतियोगित्वम्। **अभिमत**पदमसंभववारणाय, **याव**त्पदमर्थान्तरवारणायेति **परिभाषायाम्** ११ अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माहमद्वयम्, अत्र प्रमाणं वेदान्ता गुरवोनुभवस्तथा। [शरीरप्रापकं

**मिश्रितकर्ममध्यमं**-स्वाश्रमोचितकाम्यकर्मानुष्ठानादि योग्य-

**मिश्रितकर्मसामान्यं**-चाण्डालव्याधाद्यधमशरीरप्रापकम्।

**मिश्रितकर्मोत्कृष्टं**-निष्कामकर्मानुष्ठानादियोग्यशरीरप्रापकम्

**मीमांसा**-विचारपूर्वकतत्त्वनिर्णयः ॐ१वेद(वाक्यविचारः२)र्थ-

कर्मनिर्णायको ग्रन्थः २ कर्मब्रह्मविषयकसंशयनिवारकवाक्यम् ।

**मुक्तः**–पुनः संसाराभाववान् १ अविद्याकामकर्मपारतन्त्र्यरहितः

**मुक्तिः**–निखिलबन्धराहित्येन स्थितिः १ 'मोक्ष' लक्षणमप्यत्र प०

**मुख्यार्थः**-स्वीयप्रवृत्तिनिमित्तप्रकारकप्रतीतिविशेष्यप्रसिद्धार्थः।

**मुख्यप्रयोजनत्वं**-अन्येच्छानधीनेच्छाविषयत्वम् ॥२३२५॥

**मुख्यसामानाधिकरण्यं**–अज्ञानोपहितस्य जीवस्याबाधेन ब्रह्मणा सामानाधिकरण्यम् । [नादिभिः सत्कारः

**मुदिता**–भोग्यवस्तुदर्शनजश्चित्तविकारः ※ १ पुण्येष्वभ्युत्थास-

**मुनित्वं**-वेदशास्त्रार्थतत्त्वावगन्तृत्वम् १ दुःखपङ्कमग्नजगदुद्दिधीर्षुत्वमिति प्रं० २ निरन्तराद्वितीयार्थमननशीलत्वम् ॥२३३१॥

**मुमुक्षा**–स्वरूपेच्छा ※ १ हे धातः ! संसारबन्धनान्मम मोचनं कदा भविष्यतीतीच्छा ॥ २३३३ ॥

**मुमुक्षुः**–मोक्षेच्छुः १ स्वात्मानं द्वैतबन्धान्मोक्तुमिच्छुः २३३५

**मूढः**-कर्तृत्वाद्यहङ्कारभावारूढः १ इदमर्थसाधनमिदमनर्थसाधनमिति विवेकशून्यः

**मूढावस्था**-निद्रातन्द्रादिग्रस्तावस्था ।

**मूर्खः**–प्रकृतज्ञानरहितः १ लोकवेदविरुद्धपक्षावलम्बी २ हिताहितज्ञानशून्यः ※ शास्त्रज्ञानशून्यः ४ वेदशास्त्राधीतत्वे सति संसारासक्तः

**मूर्च्छावस्था**-मुद्गरादिप्रहरणानन्तरं विशेषविज्ञानोपरमावस्था

**मूर्तत्वं**-क्रिया(श्रयत्वम् )वद्द्रव्यत्वम् २ परिच्छिन्नपरिमाणवद्द्रव्यत्वं

**मूलम्**–टीकार्हग्रन्थः ※ १ सर्वाद्यम् २ अकारणकत्वं मूलत्वम् ।

**मूलाज्ञानं**-ब्रह्मावरकमज्ञानम् १ निरवयवावच्छिन्नविभुचैतन्याच्छादकं
**मृत्युः**-दीर्घनिद्रा १ विजातीयात्ममनःसंयोगनाशः ।
**मृदुः**-क्रोधशून्यः १ 'अक्रूर' लक्षणमप्यत्र पठनीयम् ॥२३५१॥
**मेधा**-धारणावती बुद्धिः १ अनेकश्रुतग्रन्थार्थधारणशक्तिर्वा ।
**मेधावी**-मेधायुक्तः १ गुरूपदिष्टपदार्थग्रहणधारणपटुरिति ग्रं०
**मैत्री**-परानुद्वेगजनिका वृत्तिः १ सुखिष्वात्मीयत्वभावनमित्यादर्शे
**मैथुनं**-सुखविशेषहेतुशुक्रक्षरणानुकूलो व्यापारः ॥ २३५८ ॥
**मोक्षः**-स्वातन्त्र्यम् १ मृत्युर्वेति चार्वाकाः २ उत्तराधरभावेन निरन्तरोत्पादक्लेशादिदोषदूषितबोधसंततिविच्छेद इति माध्यमिकाः ३ पुनर्भावनाप्रकर्षपरिलब्धपरिशुद्धचित्तसंतान इति योगाचाराः ४ प्रलीननिखिलोपाधेः क्षेत्रज्ञस्य सततोर्द्ध्वगतिरिति जैनाः ५ आनन्दमयपरमात्मनि जीवात्मलय इति त्रिदण्डिनः ६ जीवस्य लिङ्गशरीरापगम इति भास्करीयाः ७ अक्षयशरीरादिलाभः ८ विष्णुभक्तिधर्माचरणाद्विष्णुलोकगमनं वेति वैष्णवाः ९ सर्वकर्तृत्वमेकं विहाय वासुदेवस्य सर्वज्ञत्वादीनां कल्याणगुणानामाप्तिमत्त्वे सति भगवद्याथात्म्यानुभव इति रामानुजीयाः १० जगत्कर्तृत्व, लक्ष्मीपतित्व, श्रीवत्सवर्जं भगवज्ज्ञानायत्तनिर्दुःखपूर्णसुखमिति माध्वाः ११ द्विभुजकृष्णेन सह स्वांशभूतानां जीवानां गोलोके लीलानुभव इति वल्लभीयाः १२ पारमैश्वर्यप्राप्तिरिति माहेश्वराः १३

चन्द्रचूडवपुषः सतः पार्वत्यालिङ्गनमिति कापालिकाः १४ पूर्णात्मतालाभ इत्यभिनवगुप्ताचार्याः १५ पाशुपतधर्माचरणात्पशुपतिसमीपगमनमेव पुनरावृत्तिरहितमिति पाशुपताः १६ पञ्चाग्निविद्याद्युपासनैरर्चिरादिमार्गेण हिरण्यगर्भप्राप्तिरिति हैरण्यगर्भाः १७ पारदरसपानेन देहस्थैर्यमिति रसेश्वरवादिनः १८ आत्यन्तिकैकविंशतिदुःखध्वंसः १९ स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । संसारकालीनदुःखध्वंसस्य मोक्षत्ववारणाय **कालीनान्तं** दुःखविशेषणम्, अस्मदीयदुःखसमानकालीनशुकमोक्षेऽव्याप्तिवारणाय **स्वसमानाधिकरणे**तिदुःखविशेषणमिति तार्किकाः २० स्वर्गादिरिति मी० २१ दुःखसाधनशरीरनाशे नित्यनिरतिशयसुखाभिव्यक्तिरिति तदेकदेशिनः २२ नित्यसुखसाक्षात्कार इति भाट्टाः २३ आत्यन्तिकदुःखप्रागभावपरिपालनमिति प्राभाकराः २४ परापश्यन्तीमध्यमावैखरीति वाणीचतुष्टये प्रथमायाः पराख्याया ब्रह्मरूपाया वाण्या दर्शनमिति पाणिनीयाः २५ प्रकृतिपुरुषविवेकदर्शनात्तदविवेकनिवृत्तौ पुरुषस्य स्वरूपेणावस्थानमिति साङ्ख्ययोगिनः २६ चित्तानुत्पादनमित्यन्ये २७ संसारोपरम इत्यपरे २८ आत्महानिरित्येके २९ निखिलदुःखनिवृत्तिपुरस्सरं स्वात्मानन्दावाप्तिः ३० विद्यानिरस्ताविद्यातत्कार्यब्रह्म(भावापत्तिः ३१)त्मनावस्थानमिति वे० २३९०

**मोचनं**—दूरीकरणम् १ बहिःक्षरणावच्छिन्नव्यापारो वा। २३९२

**मोहः**—ममत्वबुद्धिः १ चित्तवैक्लव्यम् ॐ २ वस्तुतत्त्वानवधारिणी चित्तवृत्तिः ३ हितेष्वहितबुद्धिरहितेषु हितबुद्धिर्वा ४ सत्येन यथार्थज्ञानरूपेण विवेकेन मोहस्य निवृत्तिः ॥ २३९६ ॥

**मौनं** वाक्संय (मः १) मेहेतुर्मनःसंयमः २ वाचौ यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते, प्रपञ्चो यदि वक्तव्यः सोपि शब्दविवर्जितः। इति वा तद्भवेन्मौनं सर्वं सहजसंज्ञितम्, गिरां मौनं तु बालानामयुक्तं ब्रह्मवादिनाम् ॥ २३९८ ॥

**म्लेच्छः**—अप (शब्दः १) भाषणम् २ गोमांसखादको यस्तु विरुद्धं बहु भाषते, सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते।

## य

**यजमानः**—स्वार्थश्रौतस्मार्तकर्मानुष्ठानकर्ता १ यजतीति २४०३

**यजुर्मन्त्रः**—अनियताक्षरपादावसानो मन्त्रः १ वृत्तगीतिवर्जितत्वे सति प्रश्लिष्टपठित [१९७५] मन्त्रः, यथाग्नीदग्नीन्विहरेति २४०५

**यजुर्वेदः**—यजुर्बहुलो वेदः १ यजुरवयवको वेदः २ यजु ( विनियोजकत्वं यजुर्वेदत्वम् ३) द्रव्यको वेद इति सुधायाम् २४०९

**यज्ञः**—देवतोद्देशेन हविस्त्यागः १ यूपसंबन्धरहितत्वे सति शास्त्रविहितकर्मविशेषः। [सारविवेकः

**यतमानवैराग्यं**-अस्मिन्संसारे इदं सारमिदमसारमिति सारा-

**यतिचान्द्रायणं**-एकमासं प्रत्यहं मध्याह्नकालेऽष्टाष्टपिण्डाशनं

**यथार्थज्ञानं**-अबाधितार्थविषयज्ञानम् १ फलवत्प्रवृत्तिजननयोग्यम्, यथा रजते इदं रजतमिति ज्ञानम् २ अविसंवादिज्ञानम्

**यथेष्टाचरणं**-अतिक्रमः १ यथाभिप्रेतानुष्ठानमिति ग्रं० २ शास्त्रमर्यादोल्लङ्घनपूर्वकस्वेष्टविषयकप्रवृत्तिः ॥ २४५९ ॥

**यमः**-हिंसादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयति निवर्तयतीति १ अहिंसा ( द्यन्यतमः २ ) दिपरिग्रहः ३ मनोमात्रसाध्यत्वे सति निवृत्तिलक्षणयोगाङ्गविशेषः ४ यमफलानि सकामानां योगशास्त्रे कथितानि, तथाहि—अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः १ क्रियाफलाश्रयत्वम् २ सर्वरत्नोपस्थानम् ३ वीर्यलाभः ४ जन्मकथन्तासंबोधः ॥ २४२३ ॥

**यागः**-मन्त्रकरणकः १ वह्न्याद्यधिकरणमिति ग्रं० २ सयूपत्वे सत्यन्त्याहुतित्वं यागत्वम्। अग्निहोत्रवारणाय सत्यन्तम्, देवगृहस्थण्डिलविशेषादिवारणायान्त्याहुतीति ३ 'यज्ञ'लक्षणम-

**याचनं**-स्वीकार(दान)ानुकूलो व्यापारः। [प्यत्र पठनीयं

**यात्रा**-किञ्चित्कार्यमुद्दिश्य देशान्तरगमनम् ॥ २४२९ ॥

**युक्तयोगित्वं**-सर्वदा ( पदार्थज्ञानवत्त्वम् १ ) समाधिमत्त्वम्।

**युक्तिः**-अर्थावधारणम् ❀ १ स्वपक्षसाधकविपक्षबाधकप्रमाणोपन्यासः। [ सकलज्ञानवत्त्वं

**युञ्जानयोगित्वं**-कादाचित्कसमाधिमत्त्वम् १ चिन्तासहकारेण

**युतसिद्धिः**–परस्परसम्बन्धशून्ययोरवस्थानम् ॥ २४३६ ॥

**युद्धम्**–परस्पराभिघातार्थं शस्त्रादिक्षेपणव्यापारः ॥२४३७॥

**योगः**-अलब्धलाभः ॐ१ दैवासुरवृत्तिनिरोधः २ स्वरूपावस्थिति-हेतुचित्तवृत्तिनिरोधः ३ क्लेशकर्मादिपरिपन्थित्वे सति चि० ४ क्लेशकर्मविघटकत्वे सति प्रमाणविपर्ययादिवृत्तिनिरोधत्वं योग-त्वम्। क्षिप्तमूढादिषु माभूद्योगत्वमिति सत्यन्तनिवेशस्तथा च तत्र वृत्तिनिरोधसत्त्वेपि क्लेशकर्माद्यविघटकत्वात्तस्य न तेषु योग-त्वम्, विवेकख्यातावपि तद्विघटकत्वात्तद्वारणाय **निरोधान्तम्**

**योगक्षेमत्वं**-अनुभवानुसारवस्तुस्थितिसङ्घटनत्वम् ॥२४४३॥

**योगरूढं**-योगार्थप्रतिपादकपदम् १ शास्त्रकल्पितावयवार्थानु-संधानपूर्वकसमुदायशक्त्यर्थबोधकपदमिति स्फोटचन्द्रिकायां

**योगरूढिः**–योगार्थवृत्तिरूढिः, यथा पङ्कजादिपदेषु ॥ २४४६॥

**योगशक्तिः**–अवयवशक्तिः, यथा पाचकादिपदानाम् २४४७

**योग्यं**-योगार्हम् १अन्यतरोपस्थितावन्यतरस्याबाधितम् २४४९

**योग्यता**-बाधकप्रमाणाभावः ॐ १ वाक्यार्थाबाधः २ तात्पर्य-विषयसंसर्गाबाधः, यथा पयसा सिञ्चति ३ एकपदार्थे परपदार्थ-सम्बन्धः ४ कार्यविशेषोत्पादने सामर्थ्यमिति ग्रं० ॥ २४५४ ॥

**योग्यानुपलब्धिः**–अभावप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितोप-लब्धिरूपप्रतियोगिकानुपलब्धिः, यथा भूतले घटो नास्तीति प्रतीतिसिद्धघटाभावप्रतियोगिनो घटस्य यद्यत्र घटः स्यादितिप्र-

सञ्जनेन(=आपादनेन)तर्ह्युपलभ्येतेति प्रसञ्जितोपलब्धिरूपप्रति-
योगिका घटस्यानुपलब्धिस्तया भूतले घटाभावप्रमा जायते इति

**योनिजशरीरं**–शुक्रशोणितयोः परस्परमेलनजन्यं शरीरम् ।

**यौक्तिकबाधः**–मृद्व्यतिरेकेण घटाभावनिश्चयवन्निखिलकार-
णीभूतब्रह्मव्यतिरेकेण प्रपञ्चाभावनिश्चयः ॥ २४५७ ॥

**यौगपद्यं**–एकका (लवृत्तित्वम् १) लोत्पत्तिकत्वम ॥ २४५९॥

**यौगिकः**–प्रकृतिप्रत्ययद्वारार्थवाचकः शब्दः १ अवयवशक्त्य-
र्थशक्तिद्वारावबोधकः शब्दः, यथा प्रियः सुखद इत्यादिः ।

**यौगिकरूढिः**–योगार्थभिन्नार्थवृत्तिरूढिः,यथोद्भिदादिपदेषु १
अवयवशक्तिसमानाधिकरणसमुदायशक्तिरूपा रूढिः ॥२४६३॥

र

**रक्षा**–रक्षणम् १ अनिष्टनिवृत्त्यनुकूलव्यापारः ॥ २४६५ ॥

**रजस्त्वं**–प्रेरकत्वे सति सक्रियत्वे सति दुःखहेतुत्वम् ॥२४६६॥

**रतिः**–भोगविलासार्थक्रिया १ यूनोरन्योन्यविषयस्थायिनीच्छेति
ग्रं० २ वस्तुविशेषविषयिका प्रीतिः ॐ३ बाह्यसाधननिरपेक्षा ।

**रमणीयत्वं**–लोकोत्तराह्लादजनकज्ञानविषयत्वम् ॥ २४७१ ॥

**रसः**-रस्यते इति १भुक्तान्नपरिणामः*२ रसनेन्द्रियमात्रग्राह्यगुणः

**रसनेन्द्रियं**-रस(ग्राहकत्वं रसनत्वम् १) ोपलब्धिसाधनमिन्द्रि-
यम् । रसनेन्द्रियरससंबन्धादावतिव्याप्तिनिरासायेन्द्रियमिति

**रसास्वादः**–विक्षेपनिवृत्तिजन्यानन्दानुभवः १समाध्यारम्भ-
समये ब्रह्मानन्दानवाप्तौ स्थूलवृत्त्यभावानन्दास्वाद इति ग्रं०

**रागः**—ध्वनिविशेषेण चित्तरञ्जकः * १ उत्कटेच्छा २ अभिमत-विषयाभिलाषो वा ३ विषयानुबुभूषा ४ पुनःपुनर्विषयानुरञ्जने-च्छेति प्रं० ५ स्त्र्यादिष्विष्टसाधनताबुद्ध्या स्नेहः ६ प्राप्तो विषयः क्षयकारणे सत्यपि न क्षीणतामित्येवमाकारश्चित्तवृत्तिविशेषः ।

**रात्रिः**-अहर्विपरीता १ सूर्यमण्डलादर्शनयोग्यकालः॥२४८६॥

**रामायणम्**—रामचरितमधिकृत्य कृतो ग्रन्थः ॥ २५८७ ॥

**रुद्रः**—सत्त्वोपसर्जनभूततमोगुणावच्छिन्नचैतन्यम् ॥ २४८८ ॥

**रूढः**—प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्याऽर्थबोधकः शब्दः, यथा गोवृक्षादिः १ सङ्केतयुक्तो नाम ॥ २४९० ॥

**रूढिः**—समुदायशक्तिः, यथा घटादिपदानाम् ॥ २४९१ ॥

**रूपम्**—तत्तद्वृत्तिरुद्दिष्टधर्मः १ चक्षुर्मात्रग्राह्यो गुणः । सङ्ख्यादि-वारणाय **मात्र**पदम्, प्रभावारणाय **गुण**पदम् ॥ २४९३ ॥

**रूपकम्**—उपमानोपमेययोरभेदे साम्यप्रतीतिः ॥ २४९४ ॥

**रेचकप्राणायामः**—पीतस्य वायोर्द्वात्रिंशन्मात्राभिस्त्यागः ।

**रोगः**—धातुवैषम्यहेतुको(व्याधिः १)मानसः शारीरो वा विकार-

## ल

[ विशेषः

**लक्षकः**·शक्यार्थसंबन्ध्यनुभावकः१ 'लाक्षणिक' लक्षणमप्यत्रप०

**लक्षणं**-इतरभेदज्ञापकम् १ असाधारणध(र्मः २)र्मप्रतिपादकवा-क्यमिति प्रं० ३ ज्ञानजनकज्ञानविषयः४ अव्याप्त्यतिव्याप्त्यसंभ-वदोषत्रयशून्यम्,यथा गोः सास्नादिमत्त्वम्५ समानासमानजाती-यव्य(ावर्तको लक्ष्यगतः कश्चिल्लोकप्रसिद्धाकारः ६)वच्छेदकम्।

नीलमुत्पलमित्यत्र सजातीयमात्रव्यवच्छेदके विशेषणऽतिप्रसङ्गवारणायासमानजातीयेति, रूपं गुण इत्यादौ विजातीयद्रव्यव्यवच्छेदकधर्मेतिव्याप्तिवारणाय समानजातीयेति ७ लक्ष्यतावच्छेदकसमनियतम् । लक्ष्यतावच्छेदकसमनियतत्वं नाम लक्ष्यतावच्छेदकेन सह समव्याप्तिकत्वम्, यथाऽन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यमिति प्रमातृलक्षणे यत्र यत्रान्तःकरणावच्छिन्नचैतन्यत्वं तत्र तत्र प्रमातृत्वं यत्र यत्र च प्रमातृत्वं तत्र तत्रान्तःकरणावच्छिन्नचैतन्यत्वमिति लक्ष्यतावच्छेदकेन प्रमातृत्वेन सह लक्षणस्य समव्याप्तिः ॥२५०५॥

**लक्षणप्रयोजनं**—व्यावृत्तिर्व्यवहारो वा ॥ २५०६ ॥

**लक्षणा**-शक्यसंबन्धः*बोध्यसंबन्धः २स्वशक्तिज्ञाप्यसंबन्ध इति प्रं० ३शक्यार्थस्मृतिव्यवहितशक्यार्थसंबन्धिपदार्थविषयाप्रतीति

**लक्षितः**—लक्षणाश्रयः १ लक्षणया बोधितोऽर्थः ॥ २५१२ ॥

**लक्षितलक्षणा**-शक्यपरम्परासंब(न्धेनार्थान्तरप्रतीति १)न्धः, यथा द्विरेफो रौतीति वाक्ये द्विरेफस्य भ्रमरपदे संबन्धस्तस्य च मधुकरे ॥ २५१४ ॥

**लक्ष्यं**—लक्षयितुं योग्यम् १वक्तृतात्पर्यविषयत्वे सति शक्यसंबद्धम्

**लघुत्वं**-ह्रस्वसंज्ञकवर्णवृत्तिधर्मविशेषः ॐ१ शीघ्राल्पोपस्थितिकत्वं

**लज्जा**-अकृत्यप्रवृत्तिः १अकार्यकरणादिजन्यो ज्ञानविशेषः ॐ२ मुखसंवरणादिकार्यजनको मनोविकारविशेषः ॥ १५२५ ॥

**लयः**-संश्लेषः १ कार्यस्य कारणे समावेशः ॐ२ प्रकृतेर्विरुद्धपरि-

णामः ॐ३ अखण्डवस्त्वनवलम्बनेन चित्तवृत्तेर्निद्रा ॥१५२८॥

**ललितः**–शृङ्गारहावजन्यः क्रियाविशेषः ॥ २५२९ ॥

**लाक्षणिकः**-लक्षणाभिज्ञः ॐ १ लक्षणयार्थबोधकः शब्दः २५३१

**लाघवम्**-लघोर्भावः १ तर्कविशेषविषयत्वम् ॥ २५३३ ॥

**लिङ्गं**-पुंसोऽसाधारणचिह्नम् ॐ १ व्या(प्याश्रयः २)प्तिविशिष्टपक्ष-धर्मताविशिष्टहेतुः ३ शब्दसामर्थ्यम् । अङ्कुरादिजननानुकूल-बीजादिसामर्थ्यवारणाय शब्देति मी० ४ प्राकृतगुणगताव-स्थात्मकधर्म इति वै० ५ लीनस्यार्थस्य(तात्पर्यादेः)गमकम् ।

**लिङर्थत्वं**-प्रवृत्तिजनकज्ञानविषयत्वम् १ कार्यबुद्धिगोचरत्वे सति (भावार्थसाध्यफलजनकत्वम् २) प्रवर्तकत्वम् ॥ २५४२ ॥

**लिपिः**-शब्दानुमापकरेखा १ अक्षरनामकसाङ्केतिकचिह्नमिति प्रं०

**लीला**–शृङ्गारभावचेष्टा १ स्त्रीणां क्रीडारूपव्यापारः ॐ २ प्रिया-नुकरणम् ३ रहस्यपूर्णव्यापारः ॥ २५४८ ॥

**लेखकः**-लेखनकर्त्ता १ शीर्षोपेतान्सुसंपूर्णान्समश्रेणिगता-न्समान्, अक्षरान्विलिखेद्यस्तु स लेखक इति स्मृतिः २५५०

**लेशाविद्या**–प्रारब्धकर्मसंपादनपटीयानविद्याया अवस्थाविशे-षः १ क्षालितलशुनभाण्डानुवृत्तलशुनवासनाकल्पोऽविद्यासंस्कारः

**लोकः**–प्राणिनां कर्मफलभोगस्थानविशेषः ॥ २५५२ ॥

**लोकवासना**-सर्वे जना यथा मां न निन्दन्ति यथा वा स्तुवन्ति तथैव सर्वदाचरिष्यामीत्यशक्यार्थाभिनिवेशः १ लोकानुभवज-नितत्वे सति लोकस्यैव पुनः पुनः ( रञ्जनाद्यर्थम् ) स्मरणहेतु-

रित्यादर्शो २ संपादयितुमशक्यत्वात्पुरुषार्थानुपयोगित्वात्क्लेशबहुत्वादिति निरन्तरञ्चिन्तनं लोकवासनानिवृत्त्युपायः २५५२

**लोकसङ्ग्रहः**-लोकनिष्ठसदाचारविषयकप्रवृत्तिजनको व्यापारः।

**लोभः**-परद्रव्याभिलाषः १ परवित्तादिकं दृष्ट्वा नेतुं यो हृदि जायते, अभिलाषो द्विजश्रेष्ठ स लोभः परिकीर्तितः २ अस्तेयेनापरिग्रहेण संतोषेण दानेन चास्य निवृत्तिः ॥ २५५५ ॥

**लोभी**-स्वद्रव्यापरित्यागित्वे सति परद्रव्यजिघृक्षुः ॥ २५५६ ॥

**लोलुपः**-अत्यासक्तः १ अतिलोभयुक्तः * २ निरर्थकमानसचेष्टावान्

**लौकिकः**-लोकप्रसिद्धः १ अप्राप्तशास्त्रजन्यधीप्रकर्ष इति ग्रं०

**लौकिकगुणाधानवासना**-समीचीनशब्दादिविषयसंपादनं

**लौकिकदोषापनयनदेहवासना**-चिकित्सकोक्तेरौषधै (मुखादिप्रक्षालनम् १) र्व्याध्याद्यपनयनम् ॥ २५६३ ॥



**वक्तृतात्पर्यं**-पुरुषाभिप्रायः १ तदर्थप्रतीतीच्छयोच्चरितत्वम्।

**वक्रोक्तिः**-वक्रमार्गेणोक्तिः १ एकेनान्याभिप्रायेणोक्तं वाक्यम्

**वञ्चकः**-वञ्चनकर्ता १ अन्यथा स्थितस्य वस्तुनोऽन्यथा रूपेण कथादिनाऽन्यमोहोत्पादक इति ग्रं० ॥ २५६९ ॥

**वञ्चनं**-स्वार्थसिद्धि(फलकं कपटाचरणम् १)व्याजेन वशीकरणं

**वर्णः**-शब्दस्य स्फुटावस्था * १ ब्राह्मणादिजातिभेदकः २५७२

**वर्तमानकालः**-सूर्यपरिस्पन्दादिक्रियावच्छिन्नः कालः १ वर्तमानोपाधिसंबन्धी २ स्वध्वंसप्रागभावानधिकरणवृत्तित्वमिति नै० ३

प्रयोगावच्छिन्नकालः ४ प्रारब्धापरिसमाप्तक्रियाश्रय इति वै०

**वर्तमानप्रतिबन्धः**-वर्तमानकालीनत्वे सति तत्त्वज्ञानप्रतिरोधः

**वशीकारवैराग्यं**-ऐहिकामुष्मिकविषयजिहासा ॥ २५७८ ॥

**वस्तुनिर्देशमङ्गलं**-स्वेष्टतमदेवतागुणगणोक्तिः ॥ २५७९ ॥

**वस्तुपरिच्छेदः**-अन्योन्याभावप्रतियोगित्वम् १ यत्किञ्चिद्वस्त्व- [नात्मत्वं

**वागिन्द्रियं**-वचनक्रियासाधनमिन्द्रियम् ।

**वाक्यं**-समभिव्याहार इरि मी० १ स्वार्थबोधसमाप्त इति वै० २ पदसमूहः । घटादिसमूहवारणाय पदेति ३ आकाङ्क्षायोग्यतासन्निधिमत्पदसमुदायः । विलम्बोच्चारितपदसमुदायेतिव्याप्तिवारणाय सन्निधीति, अग्निना सिञ्चेदिति वाक्येऽतिव्याप्तिव्यावृत्त्यर्थं योग्यतेति, गौरश्वः पुरुषो हस्तीत्यत्रातिव्याप्तिवारणायाकाङ्क्षेति ४ शाब्दप्रतीतिजन्यशाब्दप्रतीतिजनकं पदात्मकं

**वाक्यशेषः**-कथावसानम् ॐ १ अपेक्षितगुणसमर्पकः २ प्रकृतार्थविधायक इति ग्रं० ३ विध्यर्थसंदेहाधीनाकाङ्क्षाप्रयुक्तप्रयोगविषयः

**वाक्यार्थः**-पदोपस्थापितपदार्थानां परस्परसंबन्धः १ साकाङ्क्षपदार्थो निराकाङ्क्षः, यथा गौरित्युक्ते किमित्याकाङ्क्षा भवति, ततो गच्छत त्युक्ते निराकाङ्क्षं भवति २ वाक्यतात्पर्यविषयः ।

**वाक्यैकवाक्यता**-अङ्गबोधकवाक्यस्याङ्गिबोधकवाक्येन सहैकवाक्यता १ प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकाङ्क्षावशेन महावाक्यार्थबोधकत्वम् । [स्मृतिजनकः

**वाचकः**-पुराणादिपाठकः ॐ १ शक्यार्थबोधकः शब्दः २ पदार्थ-

**वाच्यत्वं**-वचनार्हत्वम् *१ पदजन्यप्रतीतिविषयत्वम् २६०५

**वाञ्छा**-इष्टसाधनताधीजन्याभीष्टविषयचित्तवृत्तिः ॥ २६०६ ॥

**वादः**-तत्त्व(बुभुत्सुना सह कथा १) निर्णयफलः कथाविशेषः २ यथार्थबोधेच्छुवाक्यमिति प्रं० ३ स्वाभिमतार्थकथनम् २६१०

**वादी**-प्रथमपक्षप्रतिपादकः १ विचारस्थले वादकथाकर्तेति प्रं० २ प्रकृतसाध्यसिद्ध्यर्थन्यायप्रयोगकर्ता ॥ २६१३ ॥

**वानप्रस्थः**-गृहस्थाश्रममपहाय गृहीतमुनिवृत्तिरसंन्यस्तः२६१४

**वायुः**-शब्दस्पर्शगुणकः १ रूपरहितत्वे सति स्पर्शवत्त्वं वायुत्वम्

**वारणं**-क्रियाप्रतिषेधः १ प्रवृत्तिविमुखीकरणं वा ॥ २६१८ ॥

**वार्त्ता**-अन्योन्यकथनम् १ कथोपकथनमिति प्रं० ॥२६२०॥

**वार्तिकं**-उक्तानुक्तदुरुक्ता (र्थव्यक्तकारित्वं वार्तिकत्वम् १)नां चिन्ता यत्र प्रवर्तते, तं ग्रन्थं वार्त्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः

**वासना**-अनुभवजन्या स्मृतेर्हेतुः १ पूर्वापरपरामर्शं विना सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुश्चित्तगतः संस्कारविशेषः, यथा स्वस्वदेशाचारकुलधर्मभाषास्वभावभेदतद्गतापशब्दसुशब्दादिषु प्राणिनामभिनिवेशः २ सुषुप्त्यवस्थागता धीसूक्ष्मावस्था । [सत्यपि क्रोधाद्यनुत्पत्तिः

**वासनाक्षयः**-विवेकजन्यचित्तप्रशमवासनादार्ढ्येन बाह्यनिमित्ते

**वासनानन्दः**-ब्रह्मध्यानादेर्व्युत्थितस्य या आनन्दस्य वासना।

---

१ आदिपदेन विषयध्यानस्य सुषुप्तेश्च परिग्रहः ।

विकल्पः-विविधकल्पनम्१पक्षान्तरबोधकः शब्दः॥२शब्दज्ञा-
नानुपाती वस्तुशून्यः ३ स्वविरोध्युत्तरज्ञानाबाध्यत्वे सति वस्तु०
विकारत्वं-जन्यत्वे सत्यजनकत्वम्॥१प्रकृतेरन्यथाभावः२६३३
विकृतिः-विकलाङ्गसंयुक्तो विधिः १ आतिदेशिकेतिकर्तव्यता-
कत्वं विकृतित्वम् २ जन्यत्वे सति जनकत्वम् ३तत्त्वानारम्भकत्वं
विक्षेपः-पुनःपुनर्विषयानुसन्धानम् ॥ १ असम्भवत्कालान्त-
रककार्यव्यासङ्गमुद्भाव्य कथाविच्छेदः ॥ २६३९ ॥
विक्षेपशक्तिः-आकाशादिविविधकार्यजननानुकूलमज्ञानसामर्थ्यं
विग्रहः-विरोधमात्रम् ॥१ वृत्त्यर्थावबोधकवाक्यम् २ समासादि-
वृत्तिसमानार्थकवाक्यम् ।  [भूतधर्मविघटकः
विघ्नः-समीहितक्रियास्वरूपप्रतिबन्धः १ कार्योत्पादप्रयोजकी-
विचारः-प्रमाणेन तत्त्वपरीक्षा ॥ १ तात्पर्यनिर्णयानुकूलयुक्त्य-
नुसन्धानम् ।  [वणमननात्मिका वृत्तिः
विचारणाभूमिका-गुरुमुपसृत्य वेदान्तवाक्यविचारात्मकश्र-
विचित्रं-विशेषेण चित्रम् ॥१ स्वविपरीतफलनिष्पत्तये प्रयत्नः ।
विच्छेदः-एकजातीयद्रव्यगुणादीनामन्यजातीयेन व्यवधानम्
विजयः-पराहङ्कारखण्डनम् ॥ २६५१ ॥
विजातीयभेदः-विरुद्धजातिकृतो भेदः,यथा वृक्षस्य शिलादितः
विज्ञानमयकोशः-ज्ञानेन्द्रियैः सहिता बुद्धिः ॥ २६५३ ॥
वितण्डा-स्वपक्षस्थापनहीना विजिगीषुकथा १ स्वपक्षानिर्दे-
शपूर्वकं परपक्षखण्डनमात्रोद्देशेन कथोपकथनम् ॥ २६५५ ॥

**वितर्कः**-सन्देहाद्यनन्तरं जायमान ऊहः ॥ २६५६ ॥

**विदेहमुक्तिः**-भाविशरीरानारम्भः १ तत्त्वज्ञानिनो भोगेन प्रारब्धकर्मक्षये वर्तमानशरीरपातः ॥ २६५८ ॥

**विद्या**-पुरुषार्थसाधनम् १ वेदार्थपरिज्ञानम् ❀ २ विद्याहेतुशास्त्रम्

**विद्यामदः**-मत्सदृशः को वेत्त्यहं पण्डितो न मत्तोऽन्यः पण्डितोऽस्तीति मनसोऽभिनिवेशः १ अहं कः ? मत्तोप्यधिकाः पण्डिता बहवः सन्ति तस्मान्मामपि कश्चित्पण्डितः पराभविष्यतीति निरन्तरश्चिन्तनं विद्यामदनिवृत्त्युपायः ॥ २६६२ ॥

**विद्वत्संन्यासः**-गृहस्थाश्रमादौ कृतश्रवणादिभिरुत्पन्नसाक्षात्कारेण गृहस्थादिना चित्तविश्रान्तिलक्षणां जीवन्मुक्तिमुद्दिश्य क्रियमाणः संन्यासः ॥ २६६३ ॥

**विधानं**-अप्र (प्राप्तस्य प्राप्तये कथनम् १ ) वृत्तप्रवर्तनम् २६६५

**विधिः**-शास्त्रोक्तव्यवस्था १ प्रवर्तकज्ञानविषयो धर्मः ❀ २ विधायकवाक्यम् ३ पुरुषप्रवर्तकवाक्यं वा ४ अज्ञातार्थज्ञापको वेदभागः ५ अप्राप्तप्रापको विधिरिति वैदिकाः ६ शब्दभावना विधिरिति भाट्टाः ७ नियोगो विधिरिति प्राभाकराः ८ इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यमिति तार्किकादयः २६७४

**विनिगमनाविरहः**-एकतरपक्षपातियुक्तिविरहः ॥ २६७५ ॥

**विनियोगः**-अनुष्ठानक्रमविधानम् १ प्रकृतक्रियाप्रवृत्तिः २६७७

**विनियोगविधिः**-अङ्गप्रधानसंबन्धबोधको विधिः ॥ २६७८ ॥

**विपरीतभावना**–अतस्मिँस्तद्बुद्धिः, यथा देहे आत्मत्वबुद्धिः।
**विपर्ययः**-बाध्यमानं ज्ञानम् १ अतस्मिँस्तत्प्र(त्ययः२)कारकनिर्णयः
**विप्रतिपत्तिः**-संशयजनकवाक्यम् १ विरुद्ध (कोटिद्वयोपस्थापकः
शब्दः२)ार्थ(प्रतिपादकानेकवचनम् ३) कवाक्यद्वयजन्यप्रतीतिद्वयं
**विप्रलिप्सा**-वञ्चनेच्छा १ अन्यथा प्रतीतस्यार्थस्यान्यथा बोधयि-
**विभक्तिः**–विभागः १ सुप्तिङित्येतदन्यतरा। [तुमिच्छा
**विभागः**–प्राप्तिपूर्विकाऽप्राप्तिः *१ परस्परासङ्कीर्णव्याप्यधर्मक-
थनम् २ संयोगसमानाश्रयत्वे सति संयोगनाशकत्वं विभागत्वम्।
**विभुत्वं**-सर्वमूर्तद्रव्यसंयोगित्वम् १ परममहत्त्वम् * २ सर्वदेशवृत्तित्वं
**विरक्तः**-अननुरक्तः १ विषयवासनाशून्यो वा २ स्वस्वरूप(ज्ञान-
पूर्वकलौकिकवैदिककर्माकारकः ३ )ातिरिक्तरतिरहितः २६९९
**विरागः**-इहामुत्र(फलभोगोपेक्षाबुद्धिः १)ार्थभोगेष्वरुचिः २७०१
**विराट्**-पञ्चीकृतपञ्चमहाभूतकार्यसमष्टिस्थूलशरीरः १ समष्टि-
स्थूल (प्रपञ्चाभिमानी २) सूक्ष्मकारणशरीरोपहितं चैतन्यम्।
**विरुद्धत्वं**– } विरोधयुक्तत्वम् १ एका(धिकरणावृत्तित्वम् २) व-
**विरोधित्वं** } च्छेदेनैकत्रावर्तमानत्वम् ३ सहा(संभवः४)नवस्था
(ननियमः ५) यित्वम् *६ साध्यव्यापकीभूताभावप्रतियोगित्वम्
**विरोधः**–इष्टार्थभङ्गः १ विपरीतार्थकत्वम् ॥ २७१० ॥
**विलासत्वं**-रागरहितत्वे सति कार्योन्मुखीभावत्वम् ॥२७११॥
**विवरणं**-व्याख्यानग्रन्थव्याख्यानम् *१ पूर्वोच्चरितवाक्यस्योत्त-

स्वाक्येनार्थकथनम् २ तत्समानार्थकपदान्तरेण तदर्थकथनम्
**विवर्तः**-पूर्वावस्थानपायेऽवस्थान्तरापत्तिः १ पूर्वरूपापरित्यागेन(रूपान्तरप्रदर्शकः२)सत्यनानाकारप्रतिभास इति प्रं० ३उपादानविषमसत्ताकत्वे सत्यन्यथाभावः। परिणामवारणाय सत्यन्तं
**विवर्तवादः**—अधिष्ठानस्वरूपमपरित्यज्य दोषवशाद्रूपान्तरेण (प्रतीतस्य) कथनम् ॥ २७२३ ॥
**विवादः**-विरुद्धो वादः१पक्षप्रतिपक्षपरिग्रहेण वदनं [संयोग
**विवाहः**-विशिष्टं वहनम्१भार्यात्वसंपादककर्म२सह धर्मचारिणी-
**विविदिषा**-वेदनेच्छा १ सद्यः स्वतत्त्वसाक्षात्कारकरणैकपरायणत्वं जनयत्स्वचित्तवृत्तिः। मुमुक्षोरष्टाङ्गयोगैकतत्परत्वं जनयन्त्यां वृत्तौ व्यभिचारवारणाय **सद्य** इति पदम्, साक्षात्कारतदिच्छयोः क्रमाद्बोधयितुं **स्व**पदद्वयम्, अद्वैतब्रह्मेतरवस्तुप्रत्यक्षहेतुतादृग्वृत्तावतिव्याप्त्यभावार्थं **तत्त्वे**ति, साक्षात्कारस्थले ज्ञानेत्युक्तौ परोक्षज्ञानकारणनिरुक्तवृत्तावतिप्रसङ्गस्तद्वारणाय **साक्षात्कारे**ति, तथा करणस्थले हेतुपदनिवेशे कर्मणां शान्त्यादीनामपि बहिरङ्गान्तरङ्गहेतुत्वेन तादृक्स्थले व्यभिचारपरिहारार्थं **करणे**ति,**एक**पदं लौकिकव्यापारान्तरव्युदासाय, **परायण**पदं वैदिककर्मरत्यभावार्थम्,**जनय**दिति प्रतिबन्धराहित्यार्थम्, **चित्ते**ति पराभिमतात्मधर्मेच्छाव्यावृत्त्यर्थम्।
**विविदिषासंन्यासः**-विवेकादिसाधनसम्पन्नेन तत्त्वज्ञानमुद्दिश्य क्रियमाणः संन्यासः ॥ २७२४ ॥

**विवेकः**-नित्यानित्यवस्तुविचारः १ संदेहानन्तरं जायमान ऊहः

**विशिष्टः**–विशेषण (युक्तः १)विशेष्यसंबन्धावगाहिज्ञानसंबन्धी

**विशिष्टाद्वैतं**–द्वैतविशिष्टमद्वैतम् १ सूक्ष्मचिदचिदात्मकशरीरविशिष्टस्य कारणस्य परमात्मनः, स्थूलचिदचिदात्मकशरीरविशिष्टस्य कार्यस्य परमात्मनश्चैक्यम् २ विशिष्टं युक्तं मिलितमद्वैतं

**विशेषत्वं**-अल्पतरविषयत्वम् १,व्यापकत्वम् * २ स्वतो व्यावर्तक)वृत्तत्वम् ३ निःसामान्यत्वे सत्येकमात्रसमवेतत्वम् ४ अन्त्यव्यावर्तकत्वे परमसीमावर्त्तित्वे वा सति नित्यद्रव्यमात्रवृत्तित्वम् ।

**विशेषणं**-विशिष्यतेऽनेन १ विशेष्यधर्मः २ प्रत्याग्यव्यावृत्त्यधिकरणतावच्छेदकत्वं विशेषणत्वम् ३ स्वकालनियतव्यावृत्तिबोधजनकत्वमित्यद्वैतरत्नरक्षणे ४ कार्यान्वयित्व सति कार्यकाले नियमेन वर्तमानत्वे सति व्यावर्तकत्वम् ,यथा नीलरूपादिकं घटस्य ५ प्रतीयमानवैशिष्ट्यप्रतियोगित्वम् ६ सजातीयमात्राद्व्यावर्तकं केवलविशेषणम् ७ स्वेतरकृत्स्नव्यावर्तकं लक्षणरूपविशेषणम्

**विशेषणविशेष्यभावसंबन्धः**-मिथो विशेषणविशेष्ययोरनुलोमप्रतिलोमतया विशेषणविशेष्यत्वे १ यत्किञ्चिन्निष्ठविशेषणतानिरूपितविशेष्यता,यत्किं०ष्यतानि०षणता वा । [चित्तवृत्तिः

**विशेषाहङ्कारः**–ब्राह्मणोऽहं क्षत्रियोहमित्याद्यभिमानात्मिका

**विशेष्यं**-व्यावर्त्यम् * विशेष्यताश्रयः २ भासमानवैशिष्ट्यानुयोगित्वं

**विश्रामः**–श्रमापनयनम् * १ प्रवृत्तव्यापारस्यावसानम् २७५२

**विश्वजीवः**—जागरे व्यष्टिस्थूलशरीराभिमानिजीवः १ व्यष्टिस्थूलसूक्ष्मकारणशरीरत्रयोपहितं चैतन्यमिति प्रं० ॥ २७५४॥

**विश्वव्यसनं**-गृहक्षेत्रादिसंपादनेच्छाहेतुर्व्यसनम् ॥२७५५॥

**विश्वासः**—वञ्चकत्वाभावसंभावना १ निर्दोषत्वेनाभिमानो वा।

**विषमम्**-विरूप ( कार्योत्पत्तिः १ ) सङ्घटनम् ॥ २७५९ ॥

**विषयत्वं**-संविन्निरूपकत्वम् *१पदवाच्यत्वम् २ शरीरेन्द्रियभिन्नत्वे सति जन्यत्वे सति साक्षात्परम्परया वोपभोगसाधनत्वम्। शरीरादावतिव्याप्तिनिरासाय **शरीरेन्द्रियभिन्नत्वे सती**ति, कालादिवारणाय **जन्यत्वे सती**ति, परमाण्वादावतिव्याप्तिवारणाय विशेष्यदलम् ३ विशब्दश्च विशेषार्थः सिनोतिर्बन्धनार्थकः, विशेषेण सिनोतीति विषयोऽर्थनियामकः २७६६

**विषयचैतन्यं**-'प्रमेयचैतन्य' वदस्य लक्षणमनुसन्धेयम्२७६७

**विषयगतपरोक्षता**-योग्यविषयस्यानावृतसंवित्तादात्म्याभावः

**विषयगतप्रत्यक्षत्वं**-ज्ञानाकारार्पणक्षमहेतुत्वम्। चक्षुरादिव्युदासायाकारसमर्पकत्वविशेषणमिति सौगताः १ तत्तदर्थस्य स्वव्यवहारानुकूलचैतन्याभेदः २ योग्य ( विषयस्य वर्तमानप्रमातृचै० ३)त्वे सति स्वाकारवृत्त्युपहितप्रमातृचैतन्याभिन्नत्वम्

**विषयवाक्यं**-विचार(ार्हं वाक्यम्१)विधायकं वाक्यम्२७७४

**विषयवासना**-शब्दादिविषयाणां भुज्यमानत्वदशाजन्यः सं-

स्कारः । [ व्यङ्ग्य आनन्दः

**विषयानन्दः**-तत्तत्स्रक्चन्दनवनितादिविषयाकारैकाग्रबुद्ध्यभि-

**विषयी**-विषयासक्तः १ शास्त्रानुसारैहिकविषयभोक्तृत्वे सत्यामु-ष्मिकार्थकर्मकर्ता ॐ२ विषयिताश्रयः ॐ ३ विषय (निष्ठावरण-निवर्तकत्वं विषयित्वम् ४ ) ावभासकचैतन्यम् ॥ २७७७ ॥

**विष्णुः**-रजस्तमोगुणोपसर्जनकसत्त्वावच्छिन्नचैतन्यम् २७७८

**विसंवादः**-प्रमाणान्तरेण बाधः १ प्रमाणाननुसरणत्वे सत्य-न्यथा स्थितस्यार्थस्यान्यथा कथनत्वम् ॥ २७८१ ॥

**विसंवादिभ्रमः**-विफलप्रवृत्तिजनको भ्रमः ॥ २७८२ ॥

**विस्मयः**-नष्टगर्वः १ अपूर्ववस्तुदर्शनादिजन्यो मानसोल्लासः।

**विहितं**-विधेयम् १ धर्मापादकं कर्म २ इष्टसाधनत्वेन वेदबोधित

**वीतानुमानं** अन्वयमुखेन प्रवर्तमानं विधायकमनुमानम् ।

**वृत्तिः**-सूत्रमात्रव्याख्या ॐ १ शाब्दबोधहेतुपदार्थोपस्थित्य-नुकूलः पदपदार्थयोः स्मार्यस्मारकभावसम्बन्धः ॐ २ विषय-चैतन्याभिव्यञ्जकोऽन्तःकरणाज्ञानयोः परिणामविशेषः । क्रो-धादिवृत्तावतिव्याप्तिवारणाय **विषयचैतन्याभिव्यञ्जक** इति, चक्षुरादौ विषयचैतन्याभिव्यञ्जकेऽतिव्याप्तिवारणार्थ-**मन्तःकरणाज्ञानयोः परिणामविशेष** इति ॥२७९१॥

---

१ व्यावहारिकघटपटाद्यर्थाकाराऽन्तःकरणस्य परिणामात्मिका वृत्तिः, प्रातिभासिकशुक्तिरजताद्यर्थाकारा त्वज्ञानस्य परि० वृत्तिरिति विभागः।

**वृत्तिविषयत्वं**–शक्तिलक्षणान्यतरज्ञानाधीनज्ञानविषयत्वम् ।

**वृत्तिव्याप्तिः**– }
**वृत्तिव्याप्यत्वं** } विषयस्य स्वाकारवृत्त्या संबन्धः १ वृत्तिविषयत्वम् २ वृत्त्युपहितचेतनविषयत्वमिति ग्रं० ३ विशिष्टशब्दादिप्रमाणबलात्तत्तद्विषयाकारधीसमुन्मेषाभिव्यक्तत्वं

**वृद्धिः**–संवर्धनम् १ अवयवोपचयः ॥ २७९९ ॥

**वेगत्वं**-क्रियाजन्यत्वे सत्यन्यक्रियाजनकत्वम्। गुरुत्वादिवारणाय सत्यन्तम् , विभागादिवारणायान्यक्रियाजनकत्वमिति ।

**वेदः**–मीनशरीरावच्छिन्नभगवद्वाक्यम् १ ब्रह्ममुखनिर्गतधर्मज्ञापकशास्त्रमिति पौराणिकाः २ सम्प्रदायानुसारेण स्वरादिविशिष्टा या वर्णानुपूर्वीपरिपाटी सः ३ इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति सः । अलौकिकपदेन प्रत्यक्षानुमाने व्यावर्त्येते इति सायणभाष्ये ४ धर्मब्रह्मप्रतिपादकमपौरुषेयं प्रमाणवाक्यम् । भारतादावतिव्याप्तिवारणायापौरुषेयमिति, आत्मादौ तद्दोषवारणाय वाक्यमितीति प्रस्थानभेदे ५ मन्त्रब्राह्मणात्मकत्वं वेदत्वम् ६ शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम् । व्यासादिचाक्षुषजन्ये भारतादौ दृष्टार्थकायुर्वेदादौ चातिव्याप्तिवारणाय सत्यन्तम् ७ वि(हि)दिताखिलशास्त्रार्थसर्वधर्मनिरूपणात् , दर्शनानां प्रमाणत्वाद्वेद इत्यभिधीयते ८ विद्यन्ते, ज्ञायन्ते, लभन्ते

वा एभिर्धर्मादिपुरुषार्था इति वेदाः ॥ २८०७ ॥
**वेदान्तः**-जीवब्रह्माभेदबोधकवाक्यम् १ वेदानामन्तोऽवसानभागः
**वेदिः**-यज्ञार्थपरिष्कृता भूमिः ॐ १ गृहोपकरणविशेषः ॥२८११॥
**वेश्या**-वित्तमात्रोपाधिप्रकटितानुरागवती ॥ २८१२ ॥
**वैखरीवाक्**-मौखिकवाय्वभिव्यङ्ग्यः सर्वश्रुतिगोचरः स्थूलः शब्दः
**वैखानसः**-ग्रामबहिष्कृताकृष्टपच्यौषधिकरणकाग्निहोत्रादिकर्मकर्ता
**वैधर्म्यम्**-विरुद्धो धर्मः १ असाधारणो धर्मः ॐ २ विभिन्नधर्म (व-
**वैधर्म्यदोषः** एकधर्म्यसमावेशः । [त्त्वम् ३) वेत्तृत्वं
**वैयधिकरण्यं**-भिन्नविभक्त्यन्तानां पदानां विभिन्नार्थनिष्ठत्वम्
**वैयात्यं**-अप्रतिसमाधेयप्रश्नपरम्परायां मौनम् १ निर्लज्जत्वम् ।
**वैरम्**-शत्रु (ता १) भावः २ परस्परविरोधः ॥ २८२४ ॥
**वैराग्यं**-विष (येषु जिहासा १) यवैतृष्ण्यम् २ दृष्टादृष्टविषयेषु
स्पृहाविरोधी चित्तपरिणामविशेष इति ग्रं० ॥ २८२७ ॥
**वैराग्यकारणं** शरीरं व्रणवत्तदन्नञ्च व्रणलेपनम् ,व्रणशो-
धनवत्स्नानं वस्त्रञ्च व्रणपट्टवत् । इत्यादि भावनम् ॥२८२९॥
**वैशेषिकशास्त्रं**-कणादप्रणीतं शास्त्रम् १ विशेषं पदार्थभेदमधि
कृत्य कृतं शास्त्रम् ॥ २८३० ॥
**वैश्यः**-कृषिगोरक्षवाणिज्यादिस्वाभाविककर्मसंपन्नः ॥२८३१॥
**वैश्वदेवः**-विश्वदेवसंबन्धीयो होमः । [मानो बलिः
**वैश्वदेवबलिः**-अग्निपितृगोश्वकाकादिभ्यो मन्त्रविशेषेण दीय-

**वैश्वानरः**–'विराड्' वदस्य लक्षणमनुसन्धेयम् ॥ २८३४ ॥

**वैष्णवः**-विष्णुमन्त्रोपासकः १ वैखानसाद्यागमोक्तदीक्षायुक्तः ।

**वंशः**-अविच्छिन्नाधारः १ पितृपितामहादिरूपोत्पादप्रबन्ध इति ग्रं० २ पुत्रपौत्रपरम्परानुगतशरीरसन्ततिप्रवाहः ॥२८३८॥

**व्यक्तिः**-पदार्थ(ाभिव्यक्तिः१)मात्रम् २ जात्याश्रयद्रव्यम् २८४०

**व्यङ्ग्यः**–व्यञ्जनया बोधितोऽर्थः ॥ २८४१ ॥

**व्यञ्जकः**–हृद्गतभावप्रकाशकोऽभिनयः ❀ १ स्वविषयेऽस्ति प्रकाशते इत्यादिव्यवहारप्रतिबन्धकमात्रापनेता ॥ २८४४ ॥

**व्यञ्जना**–प्रकटकारकक्रिया १ मुख्यार्थसंबद्धासंबद्धसाधारणमुख्यार्थबाधग्रहाद्यप्रयोज्यप्रसिद्धाप्रसिद्धार्थविषयकधीजनकत्वम्

**व्यतिरेकः**-परस्परमर्थानागमः १ यदभावे यदभावः,यथा यत्र यत्र सर्वप्राणिहिंसनशीलित्वे सति पशुत्वाकृतिविशिष्टा काचन व्यक्तिर्न भवति तत्र तत्र सिंहप्रत्ययोपि न भवति २ विभिन्नत्वम्

**व्यतिरेकवैराग्यं**–चित्तगतदोषाणां मध्ये पक्वेभ्योऽपक्वान्व्यतिरेकेणावधार्य तज्जिहासा ॥ २८५१ ॥

**व्यतिरेकव्यभिचारः**–कारणाभावे कार्यसत्त्वम् १ कार्याधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्वमिति ग्रं० ॥ २८५३ ॥

**व्यतिरेकव्याप्तिः**–हेत्वभावसाध्याभावयोर्व्याप्तिः १ साध्याभाव ( पुरःसरत्वम्२) व्यापकीभूताभावप्रतियोगित्वम् २८५६

**व्यतिरेकसहचारः**–कारणाभावे कार्याभावः ॥ २८५७ ॥

व्यतिरेक्यनुमानं-व्यतिरेकव्याप्तिविशिष्टहेतुकानुमानम् ।
व्यधिकरणत्वं-तदधिकरणावृत्तित्वम्१ 'वैयधिकरण्य' लक्षणमप्य०
व्यपदेशः-कपटम् १ विरुद्धानुष्ठानम् * २ शब्दप्रयोगः ३ नामोल्लेखनम् * ४ मुख्यव्यवहारः ५ एकस्मिन्नुभयारोपः, यथा देवदत्तस्यैक एव पुत्रः स एव ज्येष्ठः स एव कनिष्ठः ॥२८६५॥
व्यपेक्षा-सामर्थ्यविशेषः१अवयवार्थापेक्षणम् २ 'एकार्थिभाव' लक्षण०
व्यभिचारः-निन्दिताचारः * १ साध्याभाववद्वृत्तित्वम् २८७२
व्यभिचारिणी-भ्रष्टाचारिणी स्त्री १ जारसमूहगामिनी २८७४
व्यर्थः-विफलः*अर्थशून्यः २स्वसमानाधिकरणावश्यक्लृप्तधर्मान्तर-घटितः
व्यवधानं-द्रव्यान्तरेण द्रव्यान्तरस्याच्छादनम् ।
व्यवसायः-प्राथमिकज्ञानम् १ विषयविषयकज्ञानं ना २ ज्ञानविष(यकलौकिकमानसप्रत्यक्षविषयः ३)यीभूतं ज्ञानम् २८८२
व्यवसायबुद्धिः-निश्चयात्मिका बुद्धिः १ यद्भवेत्तद्भवतु मया तु यन्निश्चितं तन्निश्चितमेवेति दृढविचार इति मं० ॥२८८४॥
व्यवस्था-विषयान्तरपरिहारेण विषयविशेषस्थापनम् २८८५
व्यवहारः-कार्यानुकूलशब्दप्रयोगः*भाषोत्तरक्रियानिर्णायकः२ वादिप्रतिवादिकर्तृकः संभवद्योगस(ाक्षि)त्वप्रमाणको विरोधकोटिव्यवस्थापनानुकूलो व्यापार इति मदनरत्ने ३ वि नानार्थेऽव सन्देहे हरणं हार उच्यते, नानासन्देहहरणाद्व्यवहार इति स्मृतः ४व्यवह्रियते(ज्ञायतेनेन५)हानोपादानादिकं क्रियतेनेनेति

**व्यष्टिः**-पृथक्पृथगवभासमानः पदार्थः १ प्रत्येकवृक्षवदनेकबुद्धि
**व्यसनं**-इष्टानिष्टवस्तुषु चित्तसं(योजनम्)लग्नम्। [विषयः
**व्याकरणं**-व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा यस्मिंस्तत् १ प्रत्यय-
विधानसामर्थ्यादर्थनिश्चयः २ अर्थविशेषमाश्रित्य स्वरप्रकृति-
प्रत्ययादिविशेषादीन्विदधत्पदखण्डार्थविशेषज्ञापको ग्रन्थः ३
वेदाङ्गत्वे सति शब्दसाधुताबोधकत्वं व्याकरणत्वम् ॥२८९७॥
**व्याकरणप्रयोजनं**-वैदिकपदसाधुत्वज्ञानेनोहादिकम्१ म्लेच्छा
मा भूमेत्यधेयं व्याकरणमिति महाभाष्ये ॥ २८९९ ॥
**व्याख्यानं**-वक्तृता १ फलमाहात्म्योपासनप्रकारादिकथनमिति
ग्रं० २ पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना, आक्षे-
पस्य समाधानं व्याख्यानं पञ्चलक्षणम् ॥ २९०२ ॥
**व्याघातः**-विरुद्धसमुच्चयः १ परस्परविरुद्धधर्मयोरेकाधिकरणे
समुच्चयः *२ असंबद्धार्थकवाक्यम् ३ यावज्जीवमहं मौनी ब्रह्म-
चारी च मे पिता, माता तु मम वन्ध्याऽऽसीदपुत्रश्च पितामहः।
**व्याजः**-विभवाभावः *१ अन्यफलसाधनतया स्वेष्टस्यान्यफ-
लसाधनत्वेन ज्ञापितस्याचरणम् ॥ २९०८ ॥
**व्यापकत्वं**-सर्वसंबद्धत्वम् * १ अधिकदेशवृत्तित्वम् २ स्वाधि-
करणवृत्त्यन्ताभावाप्रतियोगित्वम् * ३ देशाद्यन्तरहितत्वम्।
**व्यापारत्वं**-तज्जन्यत्वे सति त(त्सहायत्वम्१)ज्जन्यजनकत्वम्,

---

१ कारकेण जन्यत्वे सति तत्कारकजन्यक्रियां प्रतिजनकः।

यथा कुठारदारुसंयोगः । ईश्वरेच्छादिवारणाय सत्यन्तम्, दण्डरूपादिवारणाय **तज्जन्यजनकत्व**मिति ॥ २९१४ ॥

**व्याप्तिः**- व्यापनम् १ साध्य (ाभाववदवृत्तित्वम् २)साधनयोरव्यभिचरितसंबन्धः ३ साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यमिति ग्रं० ४ स्वाभाविकसंबन्धः

**व्याप्यत्वं**-अव्याप्याभाववदवृत्तित्वम् १ साध्यवदन्यावृत्तित्वे सति व्याप्याश्रयत्वम् * २ न्यूनदेशवृत्तित्वम् ॥ २९२२ ॥

**व्याप्यवृत्तित्वम्**-स्वसमानाधिकरणात्यन्ताभाव ( ाप्रतियोगित्वम् १ ) प्रतियोगितानवच्छेदकधर्मवत्त्वम् ॥ २९२४ ॥

**व्यायामः**-स्वास्थ्योन्नतिसंपादनार्थं विधिपूर्वकमङ्गसञ्चालनम् ।

**व्यवर्तकत्वं**-लक्ष्यवृत्तित्वे सतीतरभेदव्याप्यत्वम् ॥२९२६॥

**व्यावहारिकत्वं**-आगन्तुकदोषासहकृताविद्याकार्यत्वम् १ ब्रह्मज्ञानपूर्वाबाधितत्वे सत्यात्मज्ञानोत्तरसत्तास्फूर्तिशून्यत्वम् २९२८

**व्यावृत्तिः**-तद्धर्मावच्छिन्नेतरभेदः ॥ २९३० ॥

**व्यासङ्गः**-कार्यान्तर(ानासक्तिः१)परित्यागेनैकपरत्वम् २९३२

**व्यासज्यवृत्तित्वं**-एक(मात्रवृत्तिधर्मान०)त्वानवच्छिन्नपर्याप्तिमत्त्वं

**व्युत्पत्तिः**-शक्तिग्रहजन्यसंस्कारः १ शब्दानामर्थावबोधकशक्तिरिति ग्रं० २ समुदायशब्दस्यावयवशोऽर्थबोधकशक्तिः २९३६

**व्रतं**-नियमाभिधानम्१क्रियाविषयकोनियमः२दीर्घकालानुपालनीयसङ्कल्पः३सम्यक्सङ्कल्पजनितानुष्ठेयक्रियाविशेषरूपमिति हेमाद्रौ

## श

**शक्तं**-कार्योत्पादनयोग्यम् १ शक्त्याश्रयः २ 'वाचक' लक्षणमप्यत्र०

**शक्तिः**-कार्यजननानुकूलं कारणनिष्ठं सामर्थ्यम् ॥ २९४२ ॥

**शक्तिवृत्तिः**-पदपदार्थयोर्वाच्यवाचकभावसंबन्ध इति वै० १ पदानामन्वयानुभवजनन ( योग्यत्वम् २ ) सामर्थ्यमिति वे० ३ अस्मात्पदादयमर्थो बोद्धव्य इ(त्यनादिसङ्केतः ४)तीश्वरेच्छेति नै०

**शक्तिग्राहकः**-शक्तिगृहीता १ शक्तिपरिच्छेदक इति पं० २९४९

**शक्यः**-क्रियासंभवः १ पदनिष्ठशक्तिविषयत्वं शक्यत्वम् २९५१

**शठः**-जडबुद्धिः ॐ १ कामिनीविषयकपटपटुः ॥ २९५३ ॥

**शपथः**-स्वोक्तसत्यत्वप्रत्यायनोद्देश्यकोऽसत्यत्वप्रसङ्गेऽनिष्टाभ्युपगमः १ स्वाभिप्रायबोधानुकूलशपनकरणमिति ग्रं० ॥२९५४॥

**शब्दगुणः**-आकाशविशेषगुणः १ श्रोत्रग्राह्यो गुणः २९५६

**शब्दतात्पर्य**-तदितरप्रतीतिमात्रेच्छयानुच्चरितत्वे सति तदर्थप्रतीतिजननयोग्यत्वम्, यथा भोजनप्रकरणे सैन्धवमानयेतिवाक्यस्थं सैन्धवपदं लवणेतराश्वादिप्रत्यायनेच्छयानुच्चरितत्वे सति लवणरूपार्थविषयकप्रतीतिजननयोग्यमिति ॥२९५७॥

**शब्दपुनरुक्तिः**-समानार्थकपूर्वानुपूर्वीकशब्दप्रयोगः, यथा घटो घटः

**शब्दप्रमाणं**-शाब्दप्रमाकरणम् १ वर्णतादात्म्येनार्थबोधजनकम् २ असन्निकृष्टार्थप्रतिपादकं वचनम्। अनुवादविसंवादव्यवच्छेदायासन्निकृष्टपदम्, अपेक्षितादिपदनिराकरणायार्थप्र-

**हणम्**, अनुमानत्वनिराकरणाय **वचन**मिति मी० ३ समयबलेन सम्यक्परोक्षानुभवसाधनम् । अनुमानादिव्यावृत्त्यर्थं **समयग्र**-हणम्, प्रत्यक्षव्यावृत्त्यै **परोक्ष**पदम्, संशयादिव्यावृत्त्यै **सम्य**-गिति, स्मृतिव्यावृत्त्यर्थम**नुभवे**तीति **भूषणे** ४ आप्तोच्चरितत्वे सति वाक्यत्वम् । अनाप्तोच्चरितवाक्येऽतिव्याप्तिवारणाय **स**-त्यन्तम्, जबगडदशादावतिव्याप्तिवारणाय **वाक्ये**ति ५ स्व-समानविषयवाक्यार्थयथार्थज्ञानजन्यत्वम् ॥ २९६४ ॥

**शब्दलिङ्गं**-अर्थप्रकाशनसामर्थ्यमिति मीमांसकाः ॥२९६५॥

**शब्दाध्याहारः**-आकाङ्क्षितार्थबोधकपदानुसन्धानम् २९६६

**शमः**- मनःसंयमः १ नित्यनैमित्तिककर्मातिरिक्तानां व्यापा-राणामन्तरिन्द्रियनिग्रह इति **तत्त्वालोके** २ ब्रह्मज्ञानोपयो-गिव्यापारातिरिक्तचित्तव्यापारमात्रनिरोधः ॥ २९६९ ॥

**शरीरम्**-शीर्यते प्रतिक्षणं नश्यतीति १ सुखदुःखान्यतरसाक्षा-त्काररूपभोगायतनमिति वे० २ निरपेक्षत्वगिन्द्रियाधारः । अङ्गुल्याद्यवयवानां प्रत्येकं शरीरत्वनिरासाय **निरपेक्ष**पदमिति देहात्मवादिनः ३ आत्मनो भोगायतनम् ४ अन्त्यावयविमात्र-वृत्तिचेष्टावद्वृत्तिजातिमत्त्वं शरीरत्वम् । हस्तत्वपृथिवीत्वद्रव्यत्व-सत्त्वादिवारणाय प्रथमवृत्तयन्तम्, घटत्वादिवारणाय **चेष्टाव-वृत्ती**ति, घटशरीरसंयोगादिवारणाय **जातिमत्त्व**मिति २९७४

**शरीरी**-देहावच्छिन्नात्मा १ भोगा (श्रयः २) वच्छेदकत्वं शरीरित्वं

**शस्त्रं**-अप्रगीतमन्त्रसा (ध्या स्तुतिः १ ध्यं कर्म २) ध्यम् २९७८

**शाब्दबोधः**-शब्दाज्जातो बोधः *१ एकपदार्थेऽपरपदार्थ-संसर्गविषयकं ज्ञानम् २ शक्तिलक्षणान्यतरसंबन्धेन पदजन्य-पदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यत्वम् ॥२९८१॥

**शाब्दीप्रमा**-वाक्यकरणिका प्रमा १ आप्तोक्तार्थविषयिणी-शब्दजन्या वृत्तिरिति म्र० २ शब्दविज्ञानादसन्निकृष्टेऽर्थे-विज्ञानम्। प्रत्यक्षव्यवच्छेदार्थमसन्निकृष्टेति, आकाशं भक्ष-येत्यादिव्यवच्छेदायार्थेतीति शाबरभाष्ये ॥ २९८४ ॥

**शाब्दीभावना**-पुरुषप्रवृत्त्यनुकूलभावकव्यापारविशेषः २९८५

**शारीरकशास्त्रं**-शास्यते प्रतिपाद्यते तत्त्वं शिष्येभ्योऽनेनेति।

**शास्त्रम्**-हितशासकम् १ एकप्रयोजनोपनिबद्धाशेषार्थप्रतिपाद-कम् *२ लोकानधिगतार्थ(ज्ञापक)वक्तृत्वम् ३ प्रवृत्तिश्च निवृत्तिश्च पुंसां येनोपदिश्यते, तद्धर्माश्चोपदिश्यन्ते शास्त्रं शास्त्रविदो विदुः

**शास्त्रवासना**-शास्त्रतात्पर्याग्रहणेन केवलशास्त्राध्ययनेष्वास-क्तिः १ शास्त्रानुभवजनितत्वे सति शास्त्रस्यैव पुनः पुनः (वा-दिजयाद्यर्थम्) स्मरणहेतुरिति ग्रं० २ अनात्मशास्त्रेषु सकल-ग्रन्थाभ्यासपाटववादिविजिगीषाद्यभिनिवेशहेतुः ३ सर्वग्रन्था-नां जन्मसहस्रैरप्यध्येतुमशक्यत्वादसारबहुलत्वाद्दर्पहेतुत्वात्स-र्वेषां वादिनां दुर्जयत्वादात्मपराभवस्यावश्यं भावित्वाद्वृथा श्रमो-यमिति निरन्तरश्चिन्तनं शास्त्रवासनानिवृत्त्युपायः ॥२९९३॥

**शास्त्रवासनाफलं**-श्रमासूयामानमत्सरमहत्तिरस्कारसच्छा-
स्त्रद्वेषादिद्वारा महानर्थः ॥ २९९४ ॥

**शास्त्रार्थवासना**-शास्त्रतात्पर्याग्रहणपूर्वकशास्त्रार्थमात्रेष्वासक्तिः

**शास्त्रीयत्वं**-शास्त्र(संबन्धित्वम् १)स्थपदशक्यतावच्छेदकत्वम्

**शास्त्रीयगुणाधानदेह०**-गङ्गास्नानशालग्रामतीर्थादिसंपादनं

**शास्त्रीयदोषापनयनदेहवासना**-स्नानाचमनादिभिरशौ-
चाद्यपनयनम्। [तिरेकेण प्रपञ्चाभावनिश्चयः

**शास्त्रीयबाधः**-अथात आदेशोनेति नेतीत्यादिश्रुत्या ब्रह्मव्य-

**शिक्षा**-त्रुटिनिवारणम् १ प्रवृत्तिप्रयोजकेष्टसाधनताज्ञा(नानुकूलो
व्यापारः २)नम् ॥ ३ ह्रस्वदीर्घादिवैदिकस्वरोच्चारणप्र(कारप्रद-
र्शको ग्रन्थः ४) तिपादकं शास्त्रम् ५ शिक्ष्यते स्थानादिकमनया।

**शिक्षाप्रयोजनं**-उदात्तानुदात्तस्वरितह्रस्वदीर्घप्लुतादिविशिष्ट-
स्वरव्यञ्जनात्मकवर्णोच्चारणविशेषज्ञानम् ॥ ३००६ ॥

**शिल्पशास्त्रं**-कर्षणादिगोपुरप्राकारनिर्माणादिप्रतिपादकं शास्त्रं

**शिष्टत्वं**-अनुशासनयोग्यत्वम् १ वेदोक्ताबाधितप्रामाणिकार्थाभ्यु-
पगन्तृत्वे सति वेदविहिताकरणप्रत्यवायफलककर्मकारित्वम्।
चैत्यवन्दनप्रवृत्तबौद्धे व्यभिचारवारणाय वेदविहितेति।

**शिष्टाचारः**-शिष्टैर्धर्मबुद्ध्याऽनुष्ठीयमानोऽलौकिकव्यवहारः।

**शिष्यत्वम्**-शिक्षणीयत्वम् * १ उपदेशविषयत्वम् ॥३०१२॥

**शुद्धचैतन्यं**-निरवच्छिन्नचैतन्यम् १ जीवेश्वरविभागरहितं चै०

**शुद्धत्वं**-निर्मलत्वम् १ सर्वधर्मातीतत्वमिति ग्रं० ॥३०१६॥

**शुद्धशास्त्रवासना**-अध्यात्मशास्त्राभ्यासजन्या विषयदोषदर्शनविवेकवैराग्यादिहेतुः ॥ ३०१७ ॥

**शुद्धाद्वैतत्वं**-द्वित्वसामान्याभाववत्त्वम् १ इतरसंबन्धानवच्छिन्नकार्यकारणादिरूपद्वित्वप्रकारकज्ञानप्रतियोगिकाभाववत्त्वम् ।

**शुद्धिः**-वैदिककर्मयोग्यतासंपादकसंस्कारः १ दोषराहित्यम् ।

**शुभवासनात्वं**-शुभानुभवजन्यत्वे अविनाश्यैश्वर्यप्रदत्वे वा सति साधुसेवितत्वम् । निमेषोन्मेषादावतिव्याप्तिवारणाय **विनाशी**ति

**शुभेच्छाज्ञानभूमिका**-नित्यानित्यवस्तुविवेकादिपुरःसरा फलपर्यवसायिनी मोक्षेच्छा ॥ ३०२३ ॥

**शृङ्गारः**-प्राकृतिकसौन्दर्यव्यक्तकारी * १ रतिक्रीडाद्यर्थस्त्रीपुंसयोरन्योन्यं प्रतीच्छा २ विभावानुभावव्यभिचारिभिरभिव्यक्तं रतिरूपस्थायिभावावच्छिन्नं स्वप्रकाशानन्दात्मकं चैतन्यम् ।

**शेषः**-उपकारी*१ परोद्देश्यप्रवृत्तिकः २ इतरनिवृत्तिपूर्वकावस्थानं

**शैवः**-शिवतत्त्वे व्यवस्थितः १ पाशुपताद्यागमोक्तदीक्षायुक्तः ।

**शोकः**-इष्टवियोग(जन्यं दुःखम् १ ानुचिन्तनम् २)गे सति तत्प्रा-

**शोधनं**-निर्दोषकरणम् १ दोषनिवारणम् । [ष्यशक्यप्रार्थना

**शौचम्**-मलनिरसनम् १ शरीरमनसोः शुद्धिर्वा २ करचरणादिप्रक्षालनम् ३ अहं ममेति विण्मूत्रलेपगन्धादिमोचनम् , शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम् ॥ ३०३६ ॥

**श्यामा**-शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला,

तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्तिता ॥ २०३७॥
**श्रद्धा**-गुरूक्तवेदान्तवाक्यार्थावश्यम्भावित्वनिश्चयः १ शास्त्राचार्योपदिष्टेऽर्थेऽननुभूतेप्येवमेवैतदिति विश्वास इति ग्रं० २०३९
**श्रमः**-मार्गगमनादिजः खेदः १ स्वेदमर्दनाद्यनुभावजनको वा।
**श्रवणं**-शब्दविषयकप्रत्यक्षम् ☸ १ श्रोत्रियब्रह्मनिष्ठगुरुमुखाच्छ्रुतिवाक्यार्थविज्ञानम् २ उपक्रमादिभिः षड्भिर्लिङ्गैर्वेदान्तानामद्वितीये ब्रह्मणि तात्पर्यावधारणमित्यादर्शे ॥ २०४४ ॥
**श्राद्धं**-प्रेतोद्देशेन द्रव्यत्यागः १ पित्राद्युद्देश्यको याग इति ग्रं०
**श्रीगुरुः**-मोक्षलक्ष्मीलक्षणलक्षितः १ देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम्, सिद्धं सिद्धाधिकारांश्च 'श्री' पूर्वं समुदीरयेत्।
**श्रुतं**-श्रवणगोचरः १ काव्यनाटकादिषु परिचयः। [कल्पनं
**श्रुतार्थापत्तिः**-अनुपपद्यमानार्थश्रवणात्तदुपपादकीभूतार्थान्तर-
**श्रुतिः**-क्रमपरवचनम् १ निरपेक्षो रवः। **रव** इत्युक्ते वाक्यादावतिप्रसङ्गस्तद्वारणाय **निरपेक्ष** इति २ स्वार्थं वक्तुं पदान्तरानपेक्षं पदं
**श्रोत्रेन्द्रियं**-शब्द(ग्राहकत्वं श्रोत्रत्वम् १) ोपलब्धिसाधनमिन्द्रियं
**श्रोत्रियत्वं**-वेदवेदाङ्गपारगत्वम् १ वेदान्तार्थपारगत्वं वा २०५८
**श्लाघा**-अविद्यमानात्मगुणज्ञापनम् १ निजगुणाविष्करणमिति ग्रं०
**श्लेषः**-एकस्मिन्वाक्येऽनेकार्थता ॥ २०६१ ॥
**श्लोकः**-चतुष्पादात्मकः १ छन्दो (बद्धवाक्यम् २) विशिष्टवाक्यरचनमिति ग्रं० ३ श्लोक्यते शस्यतेऽनेनेति ॥ २०६५॥

षष्ठीविभक्तित्वं-तिबन्तदाधात्वर्थधर्मिकस्वार्थान्वयबोधास्वरूपयोग्यत्वे सति प्रथमान्यसुब्त्वम् १ हिनस्त्यर्थहिंसाधर्मिकस्वार्थकर्मत्वानुभवकसुप्सजातीयत्वमिति शब्दशक्तिप्रकाशिकायाम्

## स

[योरेकत्र समावेशः

सङ्करः-जातिभ्रंशः*१परस्परात्यन्ताभावसमानाधिकरणयोर्धः

सङ्कल्पः-कर्तव्यत्वाध्यवसायः * १ अनासन्नक्रियेच्छा ३०७१

सङ्कीर्तनं-सम्यक्प्रकारेण देवतानामोच्चारणम् ॥ ३०७२ ॥

सङ्केतः-अर्थबोधजनकः शब्दव्यापारः १ अस्मात्पदादयमर्थो बोद्धव्य इत्याकारिकेच्छा * २ स्वाभिप्रायव्यञ्जकचेष्टाविशेषः

सङ्कोचः-बहुविषयकवाक्यस्याल्पविषयकतया व्यवस्थापनम्

सङ्क्रान्तिः-राश्यन्तरसंयोगानुकूलव्यापारः ॥ ३०७६ ॥

सङ्क्षेपः-भूयसोऽर्थस्याल्पवाक्यादिना प्रकाशनम् १ लघुत्वम्

सखण्डोपाधिः-बहुपदार्थघटितो धर्मः ॥ ३०७९ ॥

सङ्ख्या-एकं द्वे त्रीणीत्यादिप्रत्यक्षविषयो गुणः १ एकत्वादिव्यवहारासाधारणकारणम्। घटादिवारणायैकत्वादीति, कालादिवारणायासाधारणेति २ नियतविषयपरिच्छेदहेतुः ३०८

सङ्गतिः-अकस्माज्जाता १ पदपदार्थयोः स्मार्यस्मारकभावसंबन्धः * २ अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयः

सङ्ग्रहः-सङ्क्षेपेण स्वरूपकथनम् * १ बह्वर्थकवाक्यानामेकः सङ्कलनम् २ विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययो

निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः ॥ ३०८८ ॥

**सङ्घातः**-दृढसंयोगस्समूहः १ समानधर्मवतां परस्परसंबन्धः ।
**सजातीयभेदः**-समानजातिकृतो भेदः,यथा वृक्षस्य वृक्षान्तरात्
**संचितकर्म**-जन्मान्तरहेतुभूतं सदवस्थितं पूर्वजन्मीयं(नं)कर्म ।
**संज्ञा**-सङ्क्षेपेण ज्ञायतेयया १ हस्तैरर्थसूचनम् ॐ २ नाममात्रबोधिका ३ रूढ्या बोधकशब्दमात्रप्रवृत्तिनिमित्तकत्वम्॥ ३०९६॥
**सत्कारः**-प्रियभाषणपादप्रक्षालनादिपूजा १ साधुरयं तपस्वी ब्राह्मण इत्येवमविवेकिभिः क्रियमाणा स्तुतिरिति ग्रं० ॥३०९८॥
**सत्ता**-आत्मधारणानुकूलव्यापारः १ विद्यमानत्वम् ॥३१००॥
**सत्यं**-स्वीकारः ॐ १ अनर्थाननुबन्धियथाभूतार्थवचनम् २ प्रियहितप्रमाणदृष्टश्रुतार्थभाषणम् * अबाधितज्ञानविषयः ४ कालत्रयाबाध्यं
**सत्वं**-सतो भावः १ कालत्रयाबाध्यत्वमिति वे० २ अर्थक्रियाकारित्वमिति बौद्धाः । [ज्ञानसुखहेतुर्गुणः
**सत्त्वगुणः**-विकृते कारणे सति चित्तस्याविकृतिः १ लघुत्वे सति
**सत्त्वापत्तिभूमिका**-निर्विकल्पकब्रह्मात्मैक्यसाक्षात्कारः। स्वप्रवज्जगतो मिथ्यात्वेन स्फुरणात्स्वप्न इति चोच्यते ॥३१११॥
**सदसद्विलक्षणत्वं**-प्रतीयमानत्वे सति बाधयोग्यत्वम् ३११२
**सदाचारः**-शिष्टव्यवहारः १ वेदादिशास्त्रानुसार्याचारो वा ।
**सदुत्तरं**-पृष्टस्य सम्यगुत्तरम् १ प्रतिज्ञापत्रानुसार्युत्तरमिति ग्रं०
**संतोषः**-सन्निहितप्राणधारणमात्रहेतुना तुष्टिः १ विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपा चित्तवृत्तिरित्यादर्शे ३११८

**संदेशः**—वाचिकार्थकथनम् । [वह्निमान्न वा

**संदेहः**—एकस्मिन्धर्मिणि विरुद्धकोटिद्वयज्ञानम् , यथा पर्वतो

**संदंशः**-एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वं

**संधिः**—सामीप्यम् १ अन्योन्यं संधानम् * २ द्विवर्णोत्पन्नवर्णवि-
कारः ३ अर्द्धमात्रोच्चारणकालेनाव्यवहितयोर्वर्णयोर्द्रुततरोच्चारणं

**संध्या**—रात्रेराद्यन्तदण्डचतुष्टयात्मककालः । [म्बोच्चारणं

**संनिधिः**-प्रकृतान्वयबोधानुकूलपदाव्यवधानम् १ पदानामविल-

**संनिपत्योपकार्यङ्गं**-सामीप्येनोपकार्यङ्गम् १ 'स्वरूपोपकार्यङ्ग'
लक्षणमप्यत्र पठनीयम् ॥ ३१२९ ॥

**संनिहितः**-व्यवधानशून्यः १ स्वरूपभिन्नत्वे सति सम्बन्धी ।

**संन्यासः**—विहितानां कर्मणां विधिना परित्यागः । अविहित-
निषिद्धत्यागिनां वारणाय **विहितानां**मिति,आलस्यादिना वि-
हितत्यागिनां वारणाय **विधिने**ति १ कर्मत्यागान्न संन्यासो न
प्रैषोच्चारणेन तु सन्धौ जीवात्मनोरैक्यं संन्यासः परिकीर्तितः ।

---

**संन्यासित्वं**-संस्कारपूर्वकवेदाधिकारित्वे सति वैराग्यशालित्वम्

**सप्तमीविभक्तित्वं**-पचधात्वर्थतावच्छेदकरूपावच्छिन्नधर्मि-
कस्वार्थाधेयत्वबोधानुकूलसुप्सजातीयत्वम् १ चैत्रधर्मिकस्वार्था-
धिकरणत्वान्वयबोधकसुप्समानानुपूर्वीकत्वमिति शब्दशक्तिप्र०

**समं**-यत्किञ्चिन्निरूपितसादृश्यवत् * औचित्येनोत्कृष्टापकृष्टयोर्योगः

**समदर्शित्वं**-मित्रारिपक्षयोरपक्षपातित्वम् १ सर्वत्रब्रह्मदर्शित्वं वा

**समनियतत्वं**–तद्व्याप्यत्वे सति तद्व्यापकत्वम् १ स्वाधिकरणवृत्त्यभावाप्रतियोगित्वमिति ग्रं० ॥ ३१३९ ॥

**समन्वयः**–वेदान्तानां ब्रह्मप्रमितिजनकत्वमिति तत्त्वदीपने१ ब्रह्मात्मैकत्वप्रतिपादकत्वेन वेदान्तवाक्यानां समनुगतत्वम् ।

**समर्पणं**–स्वोपगृहीतविषयस्य प्रतिबिम्बरूपे चित्याधानम् ।

**समवायः**–अयुतसिद्धयोः संबन्धः १ नित्यसंबन्धः । संयोगवारणाय नित्येति, गगनादिवारणाय संबन्ध इति २ संयोगभिन्नत्वे सति साक्षात्संबन्धत्वं समवायत्वम् ॥ ३१४५ ॥

**समवायिकारणं**-समवायसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणतावत् । [देकबुद्धिविषयः

**समष्टिः**–सम्यग्व्याप्तिः*१समुदायभावापन्नः पदार्थः २ वनव-

**समसमुच्चयः**–ज्ञानकर्मणो(र्युगपदनु०)एकस्मिन्कालेऽनुष्ठानं

**समाधानं**–विवादभञ्जनम् १ सिद्धान्तानुकूलतर्कादिना सम्यगर्थावधारणम् * २ निद्रालस्यप्रमादत्यागेन स्थितिः * ३ श्रवणाद्यपेक्षितचित्तैकाग्र्यम् ॥ ३१५४ ॥

**समाधिः**–कारणसामग्री १ असाध्यविषयाध्यवसायः * २ व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावे सति चित्तस्यैकाग्रता परिणामः ३ द्रष्टृस्वरूपावस्थानहेतुश्चित्तवृत्तिनिरोध इति ग्रं० ४ वृत्त्यन्तरानिरोधपूर्वकात्मगोचरधारावाहिकचित्तवृत्तिः ॥३१५९॥

**समानपदत्वं**–एकपदत्वम् १ अखण्डपदत्वं वा * २ निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् ॥ ३१६२ ॥

**समानप्राणः**-अशितपीतान्नपानादेः समीकरणकरः प्राणः ।
**समानाधिकरणत्वं**-एकाधिकरणवृत्तित्वम् 'सामानाधिकरण्य' लक्ष०
**समाप्तः-** } सम्यक्प्राप्तः १ अवसानप्राप्तः * २ आरब्धकर्मणः
**समाप्तिः** } संपूर्णम् ३ चरम (वर्णध्वंसत्वत्वम् ४) वृत्तिध्वंसः ।
**समावेशः**-बहूनामर्थानामेकत्र वाक्यादौ व्यवस्थापनम् ।
**समासः**-ध्यादिपदानामेकपदतासंपादको वृत्तिविशेषः १ व्य-स्तपदयोर्व्यस्तपदानां वैकत्र समसनमिति ग्रं० २ अभिधानाश्रि-तलोपाभाववदन्यमध्यवर्त्तिविभक्तिशून्यनामसमुदायः ३१७३
**समासप्रयोजनं**-ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वम् ३१७४
**समाहारः**-साहित्यम् १ अनुद्भूतावयवभेदः समूहः २ तुल्यवदेक-
**समीहा**-इष्टानिष्टप्राप्तिपरिहारानुकूला चेष्टा । [क्रियान्वयित्वं
**समुच्चयः**-विरोधानवगाहिज्ञानम् * १ परस्परनिरपेक्षाणाम-नेकेषामेकस्मिन्नन्वयः २ कर्मद्वयस्यैकक्रियानिष्ठत्वम् ॥ ३१८० ॥
**स(मुदायः)मूहत्वं**-अपेक्षाबुद्धिविशेषविष(यः)यत्वम् ३१८१
**समूहालम्बनं**-नानाधर्मि(र्म्यव)तावगाह्येकं ज्ञानम् १ नानाप्र-कारतानिरूपितं नानामुख्यविशेष्यताशालि ज्ञानमिति ग्रं० ३१८३
**संप्रदानत्वं**-त्यागानुयोगित्वम् १ दानकर्मोद्देश्यत्वं वा ३१८५
**सम्प्रदायः**-शिष्टपरम्परावतीर्णोपदेश इति भरतः १ गुरु-परम्परागतसदुपदि(देशविशि)ष्टव्यक्तिसमूहः ॥ ३१८७ ॥
**संबद्धत्वं**-संबन्धयुक्तत्वम् १ परस्परान्वितत्वमिति ग्रं० ३१८९

**संबन्धः**-सम्यग्बन्धः १ संसृष्टबुद्धिव्यवहारयोर्हेतुः * २ विशिष्टप्रतीतिनियामकः ३ संबन्धिभिन्नत्वे सति संबन्ध्याश्रितत्वे सत्येकः

**संबोधनं**-सम्यग्ज्ञापनम् १ अन्यत्रासक्तस्याभिमुखीकरणं वा ।

**संभवप्रमाणं**–भूयःसहचारदर्शनजन्यज्ञानम्, यथा सम्भवति ब्राह्मणे विद्या, सम्भवति सहस्रे शतमिति १ अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् ॥ ३१९७ ॥

**संभावना**-शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः * १ निश्चयप्रायऔत्कट्यापन्नसंशयः २ उत्कटैकतरकोटिकज्ञानमिति ग्रं० ॥ ३२००

**सम्यग्ज्ञातत्वं**-पदवाक्यमानादिविशिष्टज्ञानविषयताशालित्वम्

**सर्वज्ञः**-सकलज्ञाता १ स्वरूपचैतन्येन स्वाध्यस्तसर्वजगदवभासक इति मुक्तावल्याम् २ सर्वं जानातीति ज्ञः ॥ ३२०४ ॥

**सर्वनामत्वं**-स्वोच्चारणानुकूलबुद्धिप्रकारविशिष्टत्वम् १ वक्तृबुद्धिविशेषविषयत्वावच्छेदकत्वोपलक्षितधर्मावच्छिन्नार्थवाचित्वं

**सवर्णः**–समानो वर्णो यस्य १ स्वजनकयावत्स्थानप्रयत्नजन्यत्वे सति स्वाजनकस्थानप्रयत्नाजन्यत्वं सवर्णत्वम् ॥ ३२०८ ॥

**सविकल्पकं**-वैशिष्ट्यावगाहिज्ञानम्, यथा घटमहं जानमीत्यादिज्ञानम् । इच्छादिवारणाय **ज्ञानमिति**, निर्विकल्पकवारणाय **वैशिष्ट्यावगाहीति** । [ चित्तसमाधानं

**सविकल्पसमाधि**-ज्ञातृज्ञानज्ञेयविकल्पावभासपुरःसरमात्मनि

**सहकारित्वं**-स्वभिन्नत्वे सति स्वकार्यकारकत्वम् ॥ ३२११ ॥

**सहचारः**-एकाधिकरणवृत्तित्वम् १ 'सामानाधिकरण्य' लक्षणम ०
**सहसापतनतापः**-पुण्यकर्मक्षये मुद्गरादिप्रहरणजन्यस्तापः ।
**सहानवस्थानम्**-एकाधिकरणे एकस्मिन्कालेऽनवस्थितिः ।
**सहाप्रतीतिविरोधः**-एकस्मिन्काले एकाधिकरणेऽप्रतीतिः ।
**सहायता**-अन्यकर्तृकक्रियायामप्राधान्येनान्वयित्वम् ॥ ३२१६
**साकारः**-धर्माश्रयः १ आकारेण सह वर्तमानः ॥ ३२१८ ॥
**साक्षात्संबन्धः**-पारम्पर्यरहितः संबन्धः १ वृत्तित्वनियामकः संबन्धः २ यन्निष्ठसंसर्गतायां प्रतियोग्यनुयोगिविषयतानिरूपितत्वं
**साक्षात्साधनं**-पारम्पर्यरहितं साधनम् १ अव्यवहितपूर्वत्वसंबन्धेन कार्याधिकरणीभूतक्षणनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकान्यथासिद्ध्यनिरूपकधर्मवत्त्वमिति माथुर्याम् ३२२२
**साक्षित्वं**-वृत्तज्ञत्वम् ॐ १ अकर्तृत्वे सति द्रष्टृत्वम् २ उदासीनत्वे सति बोद्धृत्वमिति प्रं० ३ जीवेश्वरानुगतसर्वानुसंधातृचैतन्यत्वं
**सांख्यशास्त्रं**-सम्यग्विविच्य ख्यायन्ते प्रकटीक्रियन्ते तत्त्वानि प्रकृतिपुरुषपदार्थरूपाणि यस्मिँस्तत् ।    [शून्यत्वे सति तद्ग०
**सादृश्यं**-तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् १ तदसाधारणधर्म-
**साधकं**-साध्यज्ञापकम् १ स्वपक्षप्रमितिजनकं वा ॥ ३२३१ ॥
**साधनत्वं**-ब्रह्मविद्याहेतुत्वम् ॐ १ व्याप्याधारत्वम् ॐ २ कार्यजनकत्वम् ३ करणकारकत्वम् ॐ ४ पूर्वकालवृत्तिधर्मवत्त्वम् ३२३५
**साधारणधर्मत्वं**-तदितरवृत्तित्वे सति तद्वृत्तित्वम् ।    [शालित्वं
**साधारणकारणत्वं**-कार्यत्वावच्छिन्नकार्यतानिरूपितकारणता-

**साधुत्वम्**-अपभ्रंशभिन्नत्वम् १ अभ्युदयसाधनप्रयोगविषयत्वमिति प्रं० २ व्याकरणबोध्यत्वम् ३ पुण्यजनकतावच्छेदकजातिमत्त्वम् * ४ निर्दोषत्वम् ५ प्रियकारित्वमिति प्रं० ६ स्वपरकार्यसाधकत्वम् ७ निर्वैरः सदयः शान्तो दम्भाहङ्कारवर्जितः, निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते ॥३२४५॥

**साध्यत्वं**-निष्पाद्यत्वम् * १ व्याप्तिनिरूपकत्वम् २ अवयवत्वावच्छिन्नविषयतानिरूपितविषयताप्रयोजकत्वम् * ३ कालान्वयितावच्छेदकरूपवत्त्वम् ४ भाविकालवृत्तिधर्मवत्त्वम् ॥३२४६॥

**साम**-शत्रुवशीकरणोपायः १ प्रियवचनैः क्रोधोपशमनमिति प्रं०

**सामग्री**-कार्यायोगव्यवच्छिन्नः कारणसमुदायः ॥३२५३॥

**साममन्त्रः**-गीतिरूप [८८१४] मन्त्रः १ गीतिविशिष्टो मन्त्रः।

**सामयिकाभावत्वं**-उत्पत्तिविनाशवत्त्वे सत्यभावत्वम् ३२५६

**सामर्थ्यं**-पदानां परस्परसंबन्धः १ कार्यजननयोग्यत्वम् ३२५८

**सामवेदः**-सामबहुलो वेदः १ सामावयको वेदः २ साम(विनियोजकत्वं सामवेदत्वम् ३) द्रव्यको वेद इति सुधायाम् ३२६२

**सामानाधिकरण्यं**-एकविभक्त्यन्तत्वे सत्येकार्थनिष्ठत्वम् १ भिन्नप्रवृत्तिनिमि(त्तकत्वे सत्येकार्थप्रतिपादकत्वम् २)त्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः, यथा सोयं देवदत्तः। मृद्धटः नीलमुत्पलं राज्ञः पुरुष इत्यादिवाक्येषु व्यभिचारनिरासाय क्रमेण विशेषणं

**सामान्यं**-बहु(तरविषयः १) व्यापकम् २ नित्यमेकमनेकसमवेतं

**सामान्यधर्मः**-अनुगतधर्मः १ सादृश्यप्रयोजको धर्मः ३२७०
**सामान्यतोदृष्टानुमानं**-अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनम् १ कार्यकारणभिन्नलिङ्गकमनुमानमिति ग्रं० २ पूर्वागृहीतव्यक्तिसामान्यविषयमनु० [रीभूतं सामान्यं
**सामान्यलक्षणसन्निकर्षः**-इन्द्रियसंबद्धविशेष्यकज्ञानप्रका-
**सामान्याहङ्कारः**-सामान्यतोहमित्यभिमानात्मिका चित्तवृत्तिः
**सामीप्यमुक्तिः**-उपास्यस(मीपवृत्तित्वम् १)ामीप्यप्राप्तिः ३२७६
**सायुज्यमुक्तिः**-उपास्यात्मतापत्तिः १ सदोपास्यसहवृत्तित्वम्।
**सारत्वम्**-न्याय्यत्वम् ❀ १ उत्त(मत्वम् २) रोत्तरोत्कर्षत्वम्।
**सारथिः**-रथादिघोटकनियोगकर्त्ता ॥ ३२८१ ॥
**सारूप्यमुक्तिः**-उपास्यसमानस्वरूपप्राप्तिः ॥ ३२८२ ॥
**सालोक्यमुक्तिः**-उपास्यसमानलोकप्राप्तिः ॥ ३२८३ ॥
**सावयवः**-अवय (वजन्यः १) वेन सह वर्तमानः ॥३२८५॥
**सिद्धः**-निष्पन्नः १ कृतकार्यो वा २ सिद्धि(:-निष्पत्तिः ३) विषयः
**सिद्धसाधनं**-प्रमाणान्तरेणावगतार्थसाधनम् ॥ ३२९० ॥
**सिद्धान्तः**-अबाधितो निश्चयः * १ तत्तच्छास्त्रसिद्धोऽर्थः २ वादिप्रतिवादिनिर्णीतोऽर्थः ३ प्रामाणिकत्वेनाभ्युपगतोर्थ इति ग्रं० ४ पूर्वपक्षकोटिनिरसनपूर्वकस्वीकरणीयकोटिनिर्देशः ३२९
**सिद्धासनम्**-सिद्धये सर्वभूतादि विश्वाधिष्ठानमद्वयम्,
यस्मिन्सिद्धिङ्गताः सिद्धास्तत्सिद्धासनमुच्यते ॥३२९५॥

**सुखं**-निरुपाधिकेष्टम् * १ सत्त्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेषः २ सर्वेषामनुकूलतया वेदनीयम् । शत्रुदुःखवारणाय **सर्वेषा**मिति ३ अन्येच्छानधीनेच्छाविषयः । भोजनादावतिव्याप्तिवारणायान्येच्छान**धीने**ति ४ काम्यभावत्वम् ३३००

**सुन्दरी**-विलक्षणसंस्थानावयववती ॥ ३३०१ ॥

**सुषुप्तिजाग्रत्**-सुषुप्त्यवस्थायां सात्त्विकी या सुखाकारा वृत्तिः (यदनन्तरं प्रबुद्धस्य सुखमहमस्वाप्समिति परामर्शः) सा ।

**सुषुप्तिसुषुप्तिः**-सुषुप्त्यवस्थायां या तामसी वृत्तिः ( यद्बलात्प्रबुद्धस्य गाढं मूढोऽहमस्वाप्समिति परामर्शः) सा ॥ ३३०३ ॥

**सुषुप्तिस्वप्नः**-सुषुप्त्यवस्थायां या राजसी वृत्तिः ( यदनन्तरं दुःखमहमस्वाप्समिति प्रबुद्धस्य परामर्शः ) सा ॥ ३३०४ ॥

**सुषुप्त्यवस्था**-सुखगोचराविद्यागोचराविद्यावृत्त्यवस्था १ जाग्रत्स्वप्नोभयभोगप्रदकर्मोपरमे सति द्विविधदेहाभिमाननिवृत्तिद्वारा विशेषविज्ञानोपरमात्मिका या बुद्धेः कारणात्मनावस्थितिः ३३०६

**सुहृद्**-सर्वदानुगामी १ प्रत्युपकारमनपेक्ष्य पूर्वस्नेहं विनैवोपकर्ता ।

**सूक्ष्मशरीरत्वं**-दृगगोचरत्वे सति कारणदेहभिन्नत्वम् ३३०९

**सूत्रं**-अल्पाक्षर(त्वे सति बह्वर्थसूचकत्वं सूत्रत्वम् १)मसंदिग्धं सारवद्विश्वतोमुखम्, अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ।

**सूत्रधारः**-नाटकप्रयोगप्रधानसञ्चालकः ॥ ३३१२ ॥

**सृष्टिः**-संसाररचना १ उत्पत्त्यनुकूलव्यापारविशेषः ॥३३१४॥

**सेवकवृद्धिव्यसनं**-परराष्ट्राभिभवादीच्छया सेवकवृद्ध्यर्थेच्छा-
हेतुर्व्यसनम् । [कारित्वं

**सेवा**-पर (कार्यसाधनम् १) ार्थक्रिया २ सर्वभावेनाचार्यानुकूल-

**सोपाधिकभेदत्वं**-उपाधिसत्ताव्याप्यसत्ताकत्वम् ॥ ३३१९॥

**सोपाधिकभ्रमः**— } अधिष्ठानज्ञानानिवर्त्यो भ्रमः १ उपाधि-
**सोपाधिकाध्यासः** } निरूपणाधीननिरूपणाध्यासः २ ३ २ १

**संयमः**-इन्द्रियनिग्रहः १ सङ्कोचकारकव्यापारो वा ॥३३२३॥

**संयोगः**-विद्यमानयोरप्राप्तयोः प्राप्तिः ॐ१ क्रियाजन्यद्रव्याश्रयो
गुणः २संयुक्तव्यवहारासाधारणकारणम् । दण्डादिवारणाय **सं-
युक्तव्यवहारे**ति, कालादिवारणाया**साधारणे**ति ३जन्यद्रव्य-
वृत्तित्वे सति स्वसमानाधिकरणाभावप्रतियोगिविभागभिन्नगुणः

**संवादः**-परस्परं जनानां सम्यङ्निर्णयपूर्वकं वादो भाषणम् ।

**संवादिभ्रमः**-सफलप्रवृत्तिजनकभ्रमः 'अविसं०'स्यापीदं लक्षणं ज्ञेयं

**संशयः**-अनवधारणज्ञानम् १ संदिग्धार्थानिश्चयः * २ एकस्मि-
न्धर्मिणि विरुद्ध (भावाभावप्रकारकज्ञानम् ३)कोटिद्वयावगाहि-
ज्ञानम्, यथा आम्रो वा पनसो वेति ४ एकत्र भासमानविरुद्ध-
नानाकोटिकज्ञानम् । [वच्छिन्नप्रतियोगिताको०

**संसर्गाभावः**-संसर्गप्रतियोगिकोऽभावः १तादात्म्यभिन्नसंबन्धा

**संसारः**-मिथ्याज्ञानजन्यसंस्काररूपवासना १ स्वादृष्टोपनिबद्ध-
शरीरपरिग्रह इति **कलापे** २ संसरति(जायते म्रियते च)यस्मि-

ऽहं ममाभिमानेन जीवः सः ॥ ३३३९ ॥

**संस्कारः**-अनुभवजन्यः स्मृतिहेतुः *१ स्वाश्रयस्य प्रागुद्भूतावस्थासमानावस्थान्तरापादकोऽतीन्द्रियो धर्मः २ आत्मविशेषगुणवृत्तिमूर्त्तवृत्तिवृत्तिगुणत्वव्याप्यजातिमान् । घटादिवारणाय **गुणत्वव्याप्ये**ति,संयोगादिवारणायात्म**विशे**षगुणवृत्तीति।

**संस्कार्यं**-भू(भू)षणार्हम् १ क्रियाजनितातिशयशालित्वम् ।

**संस्कृतत्वं**-व्याकरणलक्षणाधीनसाधनयुक्तत्वम् ॥ ३३४८॥

**संहिता**-वर्णाना(मेकप्राणयोगः१)मतिशयितः संनिधिः २ स्वाभाविकार्द्धमात्राकालाधिककालव्यवायशून्यत्वम् ३ मन्त्रात्मको वेदभाग ४धर्मबोधार्थं रचिता ५ सम्यक् हितं प्रतिपाद्यं यस्याः।

**स्तुतिः**-गुणिनिष्ठगुणाभिधानम् १ आरोप्यगुणकथनमिति ग्रं०

**स्तुत्यर्थवादः**-साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम्॥ ३३५६॥

**स्तोत्रं**-गीतमन्त्रसाध्यं कर्म १ साममन्त्रसाध्या स्तुतिः ३३५८

**स्तोभः**-निरर्थकः शब्दः १ अर्थशून्यत्वे सत्युच्चारणमात्रप्रयोजनवच्छब्दः * २ अधिकत्वे सत्यृग्विलक्षणवर्णः ॥ ३३६० ॥

**स्तोमत्वं**-समूहत्वम् * १ आत्मगुणाविष्करणत्वम् ॥३३६१॥

**स्त्रीपुरुषभेदः**-पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा, शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् १ को धर्मः किं यशस्तेषां का प्रतिष्ठा च किं बुद्धिविद्याज्ञानञ्च परस्त्रीषु च यन्मनः

**स्त्रीलिङ्गत्वम्**-इयमितिव्यवहारविषयत्वम् ॥ ३३६३ ॥

**स्थलं**-जलशून्यदेशः ॐ १ तत्तद्व्यवहारजन्यशाब्दबोधविषयः।

**स्थानं**-सन्निधिविशेषः १ स्वाभिप्रायबोधानुकूला(क्रिया)स्थितिः

**स्थायित्वं**–स्थितिशीलत्वम् १ समधिककालवृत्तित्वं वा ३३६८

**स्थूलशरीरं**–पञ्चीकृतपञ्चमहाभूतकार्यं दृग्गोचरशरीरम् १ शुक्रशोणितनिर्मितत्वे सत्यस्थ्यादिसमुदायत्वं स्थूलशरीरत्वम्।

**स्नानं**–शरीरमज्जनम् १ कायप्रक्षालनमिति ग्रं० ॥ ३३७२ ॥

**स्नेहः**–चूर्णादिपिण्डीभावहेतुर्गुणः १ दर्शने स्पर्शने वापि श्रवणे भाषणेऽपि वा यत्र द्रवत्यन्तरङ्गं स स्नेह इति कथ्यते ३३७४

**स्पर्शः**–उप(पातकः १) तप्ता २ त्वगिन्द्रियमात्रग्राह्यो गुणः ३३७६

**स्पष्टब्रह्मलिङ्गकत्वं**-विषयवाक्ये ब्रह्मधर्मतया निर्णीत(ार्थबोधक)ब्रह्मलिङ्गकत्वम्, यथान्तरधिकरणविषयवाक्ये ब्रह्मधर्मतया निर्णीतं सर्वदुरितोदितत्वं फलवचनोपोद्बलनेन जीवादावसंभवेन ब्रह्मण्येव सङ्गमनीयं ब्रह्मधर्मतया निर्णीतं विद्यते इति तत्।

**स्फुटत्वं**-तद्विषयकजिज्ञासानधीनप्रतिपत्तिविषयत्वम् ॥ ३३७८

**स्फोटः**-वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः ६ अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं स्फोटत्वम् ॥ ३३८० ॥

**स्मरणं** }
**स्मृतिः** } सादृश्यानुभवाद्वस्त्वन्तरस्मृतिः १ चिरानुभूतार्थस्मरणशक्तिः ॐ २ अनुभूतविषयाधिकानवगाहिज्ञानम् ३ उद्भूतसंस्कारमात्रजन्यं ज्ञानम्। संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति, अनुभवेऽतिव्याप्तिवारणाय, **संस्कारजन्यमि-**

ति, असंभववारणायोद्भूतेति, प्रत्यभिज्ञायामतिव्याप्तिवारणाय मात्रपदम् ॥४ वेदार्थानुवादकवाक्यम् ५ स्मरणाद्वै निमित्तानां धर्माधर्मनिरूपणात् । तिमिरोत्पाटनाद्विस्मृतिरित्यभिधीयते ।

**स्वत्वम्**—स्वामित्वम् १ प्रतिग्रहयुद्धक्रियादिजयो धर्मविशेषः २ शास्त्रसंमतयथेष्टविनियोगार्हत्वम् ॥ ३३८९ ॥

**स्वगतत्वं**—स्वस्मिन्विद्यमानत्वम् । [लादितः

**स्वगतभेदः**—स्वावयवैः कृतो भेदः, यथा वृक्षस्य पर्णपुष्पफ-

**स्वतन्त्रः**—स्वेच्छाचारी १ कर्तुमकर्तुमन्यथा वा कर्तुं समर्थः २ इतर (व्यापारानधीनव्यापारवत्त्वम् ३) सत्तानधीनसत्ताकः ।

**स्वतउत्पत्तिकत्वं**—आगन्तुकभावकारणानपेक्षज्ञानसामान्य-प्रयोजकप्रयोज्यत्वम् १ दोषाभावसहकृतज्ञानसामान्यसामग्री-जन्यत्वमिति ग्रं० २ विज्ञानसामग्रीजन्यत्वे सति तदतिरिक्त-हेत्वजन्यत्वम् । विज्ञानसामग्रीजन्यत्वम प्रामाण्येप्यस्तीति परतः प्रामाण्यवादिभिश्च स्वीक्रियत इत्यतिव्याप्तिरर्थान्तरता वा स्यात् तन्निवृत्त्यर्थं **तदतिरिक्तहेत्वजन्यत्व**मिति ३३९७

**स्वतोग्राह्यं**-ज्ञानग्राहक(ातिरिक्तानपेक्षमिति भाट्टाः १ सामग्रीज-न्यग्रहविषय इति नै० २ दोषाभावसहकृत(ज्ञानसामग्रीमात्रग्राह्यम् ३ यावत्स्वाश्रयग्राहकसामग्रीग्राह्यमिति वे० ४ प्रामाण्यग्रहप्रतिबन्ध-काभावकालीनयावत्स्वाश्रयानुव्यवसायग्राह्यमिति मुरारिमिश्राः

**स्वतःप्रमाणं**-अन्यप्रमाणनिरपेक्षस्वार्थबोधनसमर्थम् ३४०३

**स्वदेशगतत्वं**-स्वाश्रयतावच्छेदकान्यदेशानवच्छिन्नाश्रयताकत्वं

**स्वधा**-पित्रुद्देशेन द्रव्यत्यागः, यथा श्राद्धादौ ॥ ३४०५ ॥

**स्वप्नजाग्रत्**-स्वप्ने मित्रादिप्राप्तिः ॥ ३४०६ ॥

**स्वप्नसुषुप्तिः**-जाग्रद्दशायां वक्तुमशक्यं यत्किञ्चित्स्वप्नेऽनुभूयते

**स्वप्नस्वप्नः**-स्वप्नेऽपिस्वप्नो मया दृष्ट इति बुद्धविषयः। [तत्

**स्वप्नावस्था**-इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था। जाग्रदवस्थाव्यावृत्त्यर्थमिन्द्रियाजन्येति, अविद्यावृत्तिमत्यां सुषुप्तावतिव्याप्तिवारणायान्तःकरणेति १ जाग्रद्भोगप्रदकर्मोपरमे सतीन्द्रियोपरमे जाग्रदनुभवजन्यसंस्कारोद्भूतविषयतज्ज्ञानावस्था २ विपरीतदर्शनत्वं स्वप्नत्वम् ॥३४११॥

**स्वप्रकाशत्वं**-सजातीयप्रकाशाप्रकाश्यत्वम् १ इतराप्रकाश्यत्वे संविदविषयत्वे वा सति प्रकाशमानत्वमित्यद्वैतदीपिकायाम् ३ स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वम् ४ अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वम्। घटादावतिव्याप्तिवारणाय सत्यन्तम्, अतीन्द्रियधर्मादावतिव्याप्तिवारणायापरोक्षेत्यादिविशेष्यम्५ अन्यानवभास्यत्वे सति स्वव्यतिरिक्तसकलावभासत्वम्३४१७

**स्वभावः**-स्वस्य भावः १ हेत्वन्तरनिरपेक्षं वस्तुस्वरूपम् ॐ २ जन्मान्तरकृतो धर्माधर्मादिशुभाशुभसंस्कारः ॥ ३४२० ॥

**स्वरः**-नाभ्यादि(रूपो)कृते वर्णाद्युच्चारणध्वनिविशेषः १ श्रुत्यनन्तरभावी यः शब्दोऽनुरणनात्मकः, स्वतो रञ्जयति

श्रोतृ चित्तं स स्वर उच्यते इति रत्नाकरे ॥ ३४२२ ॥
**स्वरूपयोग्यत्वं**-कारणतावच्छेदकधर्मवत्त्वम् ,यथा वनस्थदण्डे
**स्वरूपलक्षणं**-स्वरूपं (ान्तर्गते सति व्यावर्तकम् १) सद्व्यावर्तकम्, यथा प्रकृष्टप्रकाशश्चन्द्रः २ इतरानिरूप्यं लक्षणम् ३ स्वरूपमेवलक्षणम् , यथा सत्यज्ञानानन्दाः ॥ ३४२७ ॥
**स्वरूपसंबन्धः**-प्रतियोग्यनुयोग्यन्यतरात्मकः संबन्धः १ संबन्धान्तरमन्तरेण विशिष्टप्रतीतिजननयोग्यत्वम् ॥ ३४२९ ॥
**स्वरूपासिद्धत्वं**-हेत्वभाववत्पक्षतावच्छेदकत्वम् १पक्षेऽभाववत्त्वं
**स्वरूपोपकारकं**-प्रधानसाधनद्रव्यादिसंस्कारद्वारा प्रधानोपकारकम् ,यथा ज्ञानसाधनान्तःकरणसंस्कार(कं)द्वारा निष्कामकर्मानुष्ठानमिति वे० १कर्माङ्गद्रव्यदेवताद्युद्देशेन विधीयमानं कर्मेति मी०
**स्वशाखात्वं**-परम्परया (ध्ययनकर्मत्वम् १) नुष्ठानविषयत्वम्।
**स्वाध्यायः**-आवृत्तिपूर्वकवेदाध्ययनम् १ मोक्षशास्त्राध्ययनं वा।
**स्वामित्वं**-स्वत्वनिरूपितो धर्मविशेषः *१परिव्राजकोपाधिमत्त्वं
**स्वारसिकलक्षणा**-रूढिप्रयोजनाभाववती लक्षणा १ अभ्युनातनतात्पर्यविषयीभूतार्थनिष्ठा लक्षणा ॥ ३४४१ ॥
**स्वार्थानुमानम्**-न्यायाप्रयोज्यानुमानम् ॥ ३४४२ ॥
**स्वार्थानुमितिः**-स्वस्य व्याप्यप्रतीत्यनन्तरं व्यापकप्रत्ययः।
**स्वाहा**-देवोद्देशेन हविस्त्यागः। [स्वस्य कारः करणं
**स्वीकारः**-ममेदमिति ज्ञानात्मकः संप्रदानव्यापारः १ अस्वस्य



**हरणत्वम्**–बलाद्ग्रहणपूर्वकस्थानान्तरप्रापणत्वम् ॥३४६॥

**हरिहरः**–मूर्तिविशेषः १ हरियुक्तो हर इत्यन्योन्यः ॥३४८॥

**हर्षः**–चित्तगतसुखाभिव्यञ्जिका मुखविकासादिहेतुर्धीवृत्तिः ।

**हवनम्**–देवाद्युद्देशेन मन्त्रपूर्वकं वह्नौ हविःप्रक्षेपः ॥३४५०॥

**हासः** } कण्ठोष्ठपुटविस्फूर्जनपुरःसरमहहह इत्यट्टः१ विकृतवेष-
**हास्यं** } वाक्चेष्टादिदर्शनजन्यसुखविशेषो रदविकासादिहेतुः ।

**हिन्दुः**–हिंसातो दूरं याति १ हीनं दूषयतीति मेरुतन्त्रे २ वेद-प्रामाण्याभ्युपगन्ता ३ आसिन्धुसिन्धुपर्यन्ता यस्य भारतभूमिका, पितृभूः पुण्यभूश्चैव स वै हिन्दुरिति स्मृतः ॥३४५६॥

**हिरण्यगर्भः**–अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरः १ समष्टि-सूक्ष्म (प्रपञ्चाभिमानी २) कारणशरीरोपहितं चैतन्यम् ३४५९

**हिंसा**–प्राणिवृत्तिच्छेदः * १ अविधिपूर्वकं प्राण्युपघातः २ प्राणवियोग (प्रयोजकव्यापारः ३) ानुकूलव्यापारः ॥३४६३॥

**हेतुः**–साध्यविषयकज्ञानजनक(ज्ञानविषयः १)वचनम् २तृतीयान्त पञ्चम्यन्तं वा, यथा धूमेन धूमाद्वेति ३ प्रतिज्ञावाक्यधीजन्य-कारणाकाङ्क्षानिवर्तकज्ञानजनकहेतुविभक्तिमद्वाक्यम्॥ ३४६६॥

**हेत्वाभासः**–पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमानः १ अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषय इति ग्रं०

**हेयत्वं**–हानक्रियाविषयत्वम् १'अनुपादेय' लक्षणमप्यत्र पठनीयं

**होता**–ऋग्वेद ( वेत्ता १ ) विहितकर्मविशेषकर्ता ॥ ३४७३ ॥

**होमः**–देवतोद्देशेन वह्नौ मन्त्रद्वारा द्रव्यत्यागः १ अग्निसंयोगानुकूलक्रियानुकूलघृतादिवृत्तिनोदनादिव्यापार इति दिनकर्याम्।

**हंससंन्यासी**–शिखावर्जितो यज्ञोपवीतजटाशिक्यैकदण्डकमण्डलुधरः ग्रामैकरात्रः नित्यं कृच्छ्रचान्द्रायणपरः ॥३४७६॥

**ह्रीः**–अकार्यप्रवृत्त्यारम्भे तत्प्रतिबन्धिका लोकलज्जा ॥३४७७॥

**सहजसरलां प्रेम्णा दीर्घां समस्तविशोधिनीं,**
**सकृदपि कृपादृष्टिं सन्तो दिशन्तु भवद्विधाः।**
**कथमपि सती पूता सद्यस्तया विषयीकृता,**
**मम कृतिरियं हित्वा दोषान्भवत्वतिसद्गुणा ॥ १ ॥**

**स्थितानि ग्रन्थेषु प्रकटमुपदिष्टानि गुरुभिः,**
**गुणो वा दोषो वा न मम परवाक्यानि वदतः।**
**परन्त्वस्मिन्नास्ति श्रमफलमिदं यन्निजधिया,**
**श्रुतीनां युक्तीनामकलि गुरुवाचां च विषयः ॥ २ ॥**

सिद्धान्तरीतिषु मया भ्रमदूषितेन स्यादन्यथापि लिखितं यदि किञ्चिदस्य,
संशोधने सहृदयास्सदया भवन्तु सत्संप्रदायपरिशीलननिर्विशङ्काः ॥ ३ ॥

**यदत्र स्खलितं किञ्चित्प्रमादेन भ्रमेण वा।**
**तत्सर्वं शोधयन्त्वार्याः कस्य न स्खलितं मनः ॥ ४ ॥**

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ ५ ॥**

**बहुच्छिद्रं परित्यज्य गुणलेशजिघृक्षया।**
**परिगृह्णन्त्वदो विज्ञा ऋजवो दम्भवर्जिताः ॥ ६ ॥**

# मीमांसा-ग्रन्थाः

**न्यायसुधा**।(तन्त्रवार्तिकटीका) श्रीमद्भट्टसोमेश्वरकृता ।
सम्पादक-श्रीमुकुन्दशास्त्री। सम्पूर्ण 1-2 भाग 1000.00

**भाट्टचिन्तामणिः**। श्रीगागाभट्टविरचितः। सटिप्पणः
सम्पादकः— पं. सूर्यनारायण शुक्ल 175.00

ऽस्हगेर्दूँ. (मीमांसासूत्रस्य कांचन विस्तृता टीका)
श्रीखंडदेवविरचितः । सम्पादक— म. म. चिन्नस्वामिशास्त्री । 450.00

**मीमांसानुक्रमणिका**। मण्डनमिश्रकृता । म. म. गंगानाथ झा रचित 'मीमांसामण्डन' मण्डिता । सम्पा.-पं. ढुण्ढिराज शास्त्री ।
सम्पूर्ण 350.00

**मीमांसान्यायप्रकाशः**। आपदेवप्रणीतः। छाया-ज्ञानवतीहिन्दी-व्याख्यासहित । व्या.— डॉ. राधेश्याम चतुर्वेदी 225.00

**मीमांसापरिभाषा**। श्रीकृष्णयज्वविरचितः। 'आशुबोधिनी' संस्कृत-हिन्दी व्याख्योपेता, सटिप्पण-विमर्श-परिशिष्टादि विभूषिता ।
संस्कृत व्याग्व्या.— डॉ. गजानन शास्त्री मुसलगाँवकर ।
हिन्दी व्याख्या.— डॉ. कमलनयन शर्मा। 30.00

**शास्त्रदीपिका**। श्रीमत्पार्थसारथिमिश्र प्रणीता । प्रत्यधिकरण-विभक्तन्यायमालायुता । सोमनाथ प्रणीत 'मयूखमालिका' व्याख्या सहिता । अस्याः प्रथमस्तर्कपादः। रामकृष्ण प्रणीत 'युक्तिस्नेहप्रपूरणी-सिद्धान्तचन्द्रिका' व्याख्यायुतः
स्वोपज्ञसिद्धांतचंद्रिकागूढार्थविवरणसहितश्च ।
तर्कपाद 250.00, सम्पूर्ण 775.00